# चोरचत्वारिंशी कथा

A SANSKRIT RENDERING

OF

# ALI BABA & THE FORTY THIEVES

THE KUPPUSWAMI SA
RESEARCH INSTITUTE.
MADRAS.

BY

GOVIND KRISHNA MODAK,

SANSKRIT TEACHER, NEW ENGLISH SCHOOL, POONA

*Author of* धातुनयकल्पद्रुम, *Exercises in Sanskrit Grammar and Translation,* संस्कृताचा अभ्यास, मराठीचें अंतरंगदर्शन *etc.*

LONGMANS, GREEN & CO., LTD.

53, Nicol Road, BOMBAY.

1934

# FOREWORD.



In presenting this rendering of the popular oriental tale of 'Ali Baba and the Forty Thieves,' into the Sanskrit language, to the student-world, and to the reading public, Mr. Modak has given evidence of his mastery over the classical language of India and has vindicated the claim of Sanskrit as an instrument of expressing in an incisive manner the most modern as well as the most ancient ideas. In true oriental style, he has supplied the usual framework of the story--the fiction of a master inculcating a moral lesson upon his disciples by means of a story. Another excellent feature—entirely an innovation of the author—is the introduction in proper places of epigrams and pithy sayings in verse-form which give to the translation the appearance of an original work modelled on the pattern of the Hitopadeśa or the Pançatantra. The Sanskrit language is unequalled in its power of concise metrical argument, and in its precision and adequacy as an instrument of expression. A lover of Sanskrit, therefore, will be delighted to read these pages which will not fail to give him the impression that he is not reading a translation at all, but an original tale in Sanskrit. If the translator creates this impression, he has truly succeeded; otherwise he will deserve Shelley's strictures on the headlong rashness of translation—" It were as wise to cast a violet into a crucible that you might discover the formal principle of its colour and odour, as seek to transfuse from one language into another the creations of a poet. The plant must spring again from its seed or it will bear no flower." This excellent remark lays down the very end and purpose of a translation.

In the hands of Mr. Medak, the language becomes a wonderfully facile and fluid instrument of expressing the thought in the simplest and most natural way. The language is simple, flowing and chaste; and I make no doubt that the book will serve as an excellent Sanskrit text not only in the class but outside it. Even a student who has learnt just the bare elements of the language will be able to follow the story unaided—for if in places he will not understand the meaning of a word or an expression,—yet the story-interest will ensure that he journeys to the end. Further to help the reader, the author has adopted—and I believe rightly and with good authority—a new and natural punctuation, stopping where one is expected to stop in the reading, and not combining the vowels and consonants according to the rules of Sandhi.

The book is on the whole, excellent reading, and it is to be hoped that the author will produce many others of its like.

N. G. SURU.
Professor of Sanskrit,
*Nowrosji Wadia College, Poona.*

15th December 1933.

श्रीः

**नमो भगवते तुभ्यं वासुदेवाय धीमते ।**
**उपायेन हता येन कंसाद्या लोककण्टकाः ॥ १ ॥**

अथैकदाचार्यो नीतिमुपदिदिक्षुः प्रस्तावक्रमेण शिष्यानाह—

**नरेण प्रतिकर्तव्याश्छद्मना च्छद्मवैरिणः ।**
**यथा ते दस्यवो दास्या मारजन्याततायिनः ॥ २ ॥**

शिष्याः पृच्छन्ति—कथमेतत् ? आचार्यः प्राह—

अथेयमारभ्यते चोरचत्वारिंशी नाम कथा । यस्या अयं प्रास्ताविकः श्लोकः ।

**पुष्पंपुष्पं विचिन्वीत मूलच्छेदं न कारयेत् ।**
**मालाकार इवारामे न यथाङ्गारकारकः ॥ ३ ॥**

## प्रथमो भागः

# वनगता गुहा

**काकतालीयवत्प्राप्तं दृष्ट्वापि निधिमग्रतः ।**
**न स्वयं दैवमादत्ते पुरुषार्थमपेक्षते ॥ ४ ॥**

१. पुरा पारसीकानां पुरे कश्यपोऽलिपर्वो चेति सहोदरौ वसतः स्म । तयोर्जनको नातिप्रभूतधनो बभूव । सुतयोस्तुल्यवृत्तिरसौ मृत्युं संनिहितं

प्रेक्ष्य निजं वित्तादिकं तयोः समं व्यभजत्। येन तौ विभवाद्यर्जनविषये तुल्यावस्थौ स्याताम्। अथ कश्यपः कस्यचिन्महाधनस्य पुत्रीमुदवहत्। येन स सपद्येव नगरवासिभिर्वणिग्वरैस्तुल्यविभवो बभूव। विविधैश्च विलासैः कालमनयत्। तथा हि प्रभूतधनत्वात्, ईप्सितं किमपि वस्तु तस्य दुरासदं नासीत्।

उक्तं च—**अधनं दुर्बलं प्राहुर्धनेन बलवान्भवेत्।**
**सर्वं धनवता प्राप्यं सर्वं तरति कोशवान्॥ ५॥**

२. यथालिपर्वणः, तथा तस्य श्वशुरस्यापि, अल्पमेव वित्तमासीत्। येन स निःश्रीक उटजे कृतावासः, आत्मानं च कलत्रापत्यानि च महता कष्टेन पुपोष। अपत्यान्यपि दरिद्रस्य तस्य बहूनि बभूवुः।

उक्तं हि—**सन्ति पुत्राः सुबहवो दरिद्राणामनिच्छताम्।**
**न त्वेकोऽपि समृद्धानां विचित्रं विधिचेष्टितम्॥ ६॥**

असौ प्रत्यहमुषसि समुत्थाय, इन्धनच्छेदनाय विपिनं व्रजति। छिन्नमिन्धनं त्रयाणां गर्दभानां पृष्ठगतं करोति। पुरमानयति। तत्र च विक्रीणीते। ततश्च लब्धेन धनेन वृत्तिं करोति।

३. अथैकदालिपर्वा नित्यमिव वनं गतः। तत्र च गर्दभत्रयपर्याप्तं काष्ठभारं चिच्छेद। तत्क्षणं च दूरे नभसि विसर्पत्पांसुपटलं तस्य दृश्यतामगात्। तत्र च दत्तदृष्टिरयं जज्ञौ—। यथा—एष रजस्तोमः, एतमेव देशमुद्दिश्य सवेगं प्रधावतामश्वारोहाणां बलेनोत्थाप्यते। मेने च—। यतोऽस्मिन् देशे राजपुरुषा न संचरन्ति, तत एभिस्तुरंगसादिभिर्दस्युभिर्भाव्यम्। उक्तं हि—

**अराजकेषु राष्ट्रेषु धर्मो न व्यवतिष्ठते ।**
**नराः खादन्ति चान्योन्यं सर्वथा धिगराजकम् ॥ ७ ॥**

ततोऽसावीदृशं प्रच्छन्नं किमपि स्थानं लब्धुं सर्वतो दृशं व्यापारयामास, यत्र स चोरापक्रमणं यावत्क्षेमेण निभृतस्तिष्ठेत् ।

४. चोरांस्तु समीपागतान्प्रेक्ष्य, असौ सपदि निकटवर्तिनं महीरुह-मारुरोह । तस्य शाखास्तथा विपुलाः पल्लवघनाश्चासन्, यथा तत्र स्थितोऽयं स्वयं कस्यापि दृष्टिगोचरो न भवेत् । भाविनं त्वधोगतं वृतान्तं सर्वं द्रष्टुं प्रभवेत् । ततो नातिदूरे विशालः शिलोच्चयो वर्तते स्म । ऋजून्नतस्य यस्य शिखरं मनुजस्य दुरासदमासीत् । अथ ते हयस्थाः, शैलस्य पादमासाद्य, अवारोहन् । अलिपर्वा च तान्गणयित्वा विंशतिद्वयमितानजानात् । तैः स्वस्वसप्तयो दृढगुल्मशाखासु बद्धाः, तेषां वल्गा अपनीताः, कण्ठेषु च धान्यस्यूता आसञ्जिताः । अथ सर्वेऽपि ते स्वस्वपर्याणगोणीरादद्रिरे । या भारवत्तया रजतमहारजताभ्यां पूर्णा इवाबभुः ।

५. अन्येभ्यो विशिष्टाकारस्तेषामेकतमः, अलिपर्वणा नायकत्वेन गृहीतः । स गोणीं पृष्ठेन वहन्, तस्यैव वृक्षस्याधस्तात्प्राप, यत्रालिपर्वा निलीनोऽतिष्ठत् । ततः कुञ्जमध्येन शैलाग्रभागं यावदसौ प्राप्नोत् । तत्र स्थित्वासौ पपाठ—

**स्कन्दराज नमस्तेऽस्तु चौर्यपाटवदेशिक ।**
**दस्युदेव द्वारमिदं विवृतं कृपया कुरु ॥ ८ ॥**

पठितमात्र एतस्मिन्पद्ये द्वारमेकमपावृतम् । येन गुहान्तर्गामी मार्गः प्रकाशतामगात् । तेन मार्गेण सर्वानप्यनुचरान्प्रविष्टान्प्रेक्ष्य सोऽग्रणीः स्वयमपि प्रविष्टः । द्वारं च स्वत एव संवृतम् ।

६. ते चोराः कंचित्कालं गुहायामेव तस्थुः। तावत्तु स दारुभेदको वृक्ष एवाशरणं स्थितः । यतोऽसौ चिन्तयामास–। अहं चेदधुनैव वृक्षादवरोहेयं, ते चोराः, अनपक्रान्त एव मयि, कदाचिद्बहिरागच्छेयुः, मां च दृष्टमात्रं गृह्णीयुः—इति। अथ केनचित्कालेन द्वारमपावृतम्। तेन च प्रथमं नायको बहिराजगाम। द्वारदेशे च स्थित्वा गोणीपाणीन्सर्वानपि सहचरान्बहिर्निःसरतो ददर्श। ततश्च पद्यमेतदपाठीत्—

**स्कन्दराज नमस्तेऽस्तु चौर्यपाटवदेशिक।**
**दस्युदेव द्वारमिदं संवृतं कृपया कुरु ॥ ९ ॥**

पठितमात्रेऽस्मिन्पद्ये गुहाद्वारं स्वयमेव संववे। पूर्वमिवैतदपि पद्यमलिपर्वा स्फुटमाकर्णयत्। तूष्णीं चावर्त्य कण्ठगतमप्यकरोत्।

७. अथ सर्वे तुरंगसादिनः, स्वतुरगानपनीतमुखस्यूतान्वल्गायुतानारोपितगोणिकान्विश्लिष्टगुल्मबन्धांश्च विधाय, समारोहन्। एवं सर्वान्गमनोद्यतानालोक्य स नायकस्तांश्चकर्ष। क्षणेन च तैः सह चक्षुर्विषयमतिचक्राम।

८. एवं तिरोहितांस्तान्वीक्ष्य स काष्ठकर्तनः समाशश्वास। स्वनिलयं तु सहसा न तत्याज। स हि शशङ्के–। सद्य एवावतरेयं चेत्, ममापक्रमणात्प्रागेव, कदाचिद्विस्मृतं किमपि वस्तु नेतुं चोरः कश्चन निवर्तेत, दृष्टमात्रं च मां बन्दीकुर्वीत–इति। अतः स कंचित्कालं तथैव निलीनः स्थितः।

९. यत्पद्यं पठित्वा चोराधिपो द्वारमपाववार तत्, यच्च पठित्वा तत्संववार तत्, उभे अपि स सम्यक्सस्मार। चिन्तयामास च—। अपि

नाम पूर्वपद्येन मया प्रोक्तेन द्वारमिदं विघटेत ? । पश्यामि तावत् । धनागमस्तु संशयमारूढस्यापि भवेन्न वा । कुतः पुनरनारूढस्य ? । तन्नूनं प्राणभयमगणयता मया द्वारविघटने यत्न आस्थेयः । ततः परं दैवस्यायत्तम् । उक्तं हि—

**न संशयमनारुह्य नरो भद्राणि पश्यति ।**
**आरुह्य संशयमपि यदि जीवति पश्यति ॥ १० ॥**

एवं विचिन्त्यासौ वृक्षतोऽवतीर्य गुल्ममध्येन शैलमुखं यावद्व्राज, पद्यं चैतत्पपाठ—

**स्कन्दराज नमस्तेऽस्तु चौर्यपाटवदेशिक ।**
**दस्युदेव द्वारमिदं विवृतं कृपया कुरु ॥ ८ ॥**

अस्मिन्गीतमात्रे द्वारं तत्स्वयं विवृतम् ।

१०. तदा, अत्र गुहायामन्धतमसेन भाव्यम् । कथं चात्र सुखेन मम प्रवेशः स्यात् ? ।—इति शङ्कमान एव सः, सर्वतः स्फुटप्रकाशां विस्तीर्णां शालां प्रेक्षते स्म । प्रेक्ष्य च भृशं विसिष्मिये । सा शाला मनुजैः शैलगर्भादुत्कीर्णासीत् । तद्गर्भश्च शिरोगतच्छिद्रप्रविष्टेन सहस्रकरकिरणनिकरेण समुद्भासितोऽवर्तत । तत्र तेन विविधानि भक्ष्याणि राशीकृतानि दृष्टानि । महार्घाणां चीनांशुकानां पटान्तराणां च कुथानामपि निचयाः सुरचिता निरूपिताः । कनकस्य रजतस्य च स्थूलस्थूलाः शलाकाः संघशो विकीर्णा वीक्षिताः । तुन्दिलानि च निष्कपूर्णानि दृतिभाजनानि विलोकितानि । वस्तुजातमेतत्प्रत्यक्षीकुर्वतस्तस्य चेतसि समुदभूत्—। यथा—गुहेयमनेकान्युगपर्ययान्यावच्चोरनिलयः स्यात्—इति ।

११. अथासौ सत्वरमनन्तरकरणीयं निश्चिकाय। सपदि च गुहान्तः प्रविवेश। तत्क्षणं च द्वारं स्वयं संवृतम्। न पुनः संवृत्तं तत्तस्य भयाय। स हि तदुद्घाटनरहस्यमजानात्। ततोऽसौ स्वर्णपूर्णास्तावतीरजिनगोणी- राददे, यावतीर्वोढुं तस्य गर्दभाः प्रभवेयुः। ताश्च गोणीर्यातायातैर्द्वार्देश- मानयत्।

१२. अथ विवृतिमन्त्रेण द्वारं विवृत्य ता गोणीर्निष्कास्य रासभपृष्ठान्या- रोप्य काष्ठैश्छादयामास। येन न कोऽपि ताः पश्येत्। ततोऽसौ द्वाराद्बहिः स्थित्वा संवृतिमन्त्रं व्याजहार। द्वारं च सपदि संवृतम्। तद्धि, बहिःस्थितेन तेन यावन्मन्त्रो नोच्चारितः, तावद्विवृतमेवातिष्ठत्। ततोऽयं द्रुततरं काम- न्नगरं निवृत्तः।

## द्वितीयो भागः

# स्वर्णपरिमाणम्

**भूतिं मनोऽतिगां प्राप्य दैवतः कृपणो जनः।**
**नान्यतोऽलं गोपयितुं तां विस्मयवशं गतः॥ ११॥**

१. अथ गृहं प्राप्य, अलिपर्वा बालेयानङ्गणं प्रवेशयामास। बहिर्द्वारं निपुणं पिदधौ। गोणिकानामुपरि रचितानि काष्ठान्यपसारयामास च। ताश्च गृहे नीत्वा मञ्चकगतायाः पत्न्याः पुरः पङ्क्तिक्रमेण स्थापयामास।

२. किमेतासु गोणीषु भवेत्?—इति कौतुकाकृष्टा सा ता गोणीर्मन्दं पस्पर्श। ताश्च द्रव्यगर्भा विज्ञाय, मुहूर्तं विस्मयपरवशा न किमपि वक्तुं

शशाक। तया ह्येतावान्धनराशिरा जन्मनः कदापि नालोकितः। यत्सत्यम्, अखिलेऽपि जगति विद्यमानेन धनेन पिण्डीकृतेनाप्येतावता भाव्यम्– इत्येतदपि तस्याः कल्पनासरणिं नावतीर्णपूर्वम्।

३. अथ मुहूर्तेनेव वाचः प्रभवन्ती सा भर्तारमप्राक्षीत्–। कुत इदम्? कथं वा समासादितम्? को वास्य स्वामी?–इति। एवं पृष्टोऽसौ प्रत्युवाच–। मा तावत्। क्षणं जोषमास्व। यथाकालं सर्वमेतज्ज्ञास्यसि। ततः स सर्वा अपि गोणीर्भूमावेकैकश आवर्जयामास। सर्वं च तद्गतं धनमेकराशीचकार। पुञ्जीभूतं तत्कनकं प्रेक्षमाणायास्तस्याश्चक्षुषी प्रतिजघान, हृदयं च लोभयामास।

४. साचिन्तयत्–। अहो शोभनम्, यदि सर्वमेतदस्मदीयं स्यात्! तथा हि सति भर्तुर्मे वनगमनेन वृक्षच्छेदनेन च प्रयोजनमेव न स्यात्। नाप्यपराह्णसमयं यावत्काष्ठपाटनेन। न वेन्धनविक्रयार्थमासायं नगरभ्रमणेन। सर्वैरप्यस्माकं मनोरथैः संपत्तव्यम्। न वा पुनरस्माभिरायसितव्यमपि।

५. अथोभावपि तौ भूम्यामुपविष्टौ। अलिपर्वा च जायायै मूलतो वर्णयामास–। कथं तेन तत्स्वर्णमासादितम्। अब्रवीच्च–। भूयश्च तत्र गच्छेयम्। इतोऽपि प्रभूतं धनमाहरेयम्। किंतु रहस्यमेतत्त्वया सर्वथा रक्षणीयम्। तदधिकृत्य कस्मैचित्किंचिदपि न वक्तव्यम्।

६. आवयोरेव सर्वमेतद्वित्तम्–। इति विदित्वा सा गृहिणी हर्षनिर्भरा बभूव। सपदि च, धनमानं जिज्ञासुरसौ समुत्थाय तद्गता मुद्रा एकैकशो भूयोभूयः संख्यातुमारेभे। तां भर्तोवाच–। प्रिये किमिदमारब्धं त्वया? बहुलत्वान्नैतद्गणयितुं शक्यम्। उद्याने गर्तामेकां निर्माय स्वर्णमेतत्तत्र

निखनेव । ततश्च कालेकाले यथेष्टां मात्रामुद्धरिष्यावः । किंतु, सद्य एव धनमेतत्सुगुप्तं कर्तव्यम् । मा कश्चित्तस्य वार्तामपि जानीयात् ।

७. भार्या प्रत्युवाच—। नाथ युक्तमुक्तं त्वया । किंतु, मास्तु सर्वथा सूक्ष्मतः, यावत्सूक्ष्ममपि तावज्ज्ञातव्यमेवेदं मया—। कियद्धनमावयोर्वर्तते । अतोऽहं गत्वा कस्याश्चित्प्रतिवेशिन्याः कुडवमेकमानेष्यामि । खननव्यापृते च त्वयि तद्वसु मास्यामि । एतस्मिन्भर्त्रा भणितम्—। किमेतेन धनेन मानतो ज्ञातेन ? करोषि चेन्मद्वचनम्, तिष्ठतु तत् । अथ बलवती ते वाञ्छा, मीयतामिदम् । कस्मैचित्पुनर्नाख्यायताम् ।

८. एवं कथमपि भर्तुरनुज्ञां लब्ध्वा सा नातिदूरस्थितं यातुरगारमगात् । तां चोपस्थाय मानभाण्डं ययाचे । तया भाषितम्—। एषाहं ददामि । किं तूच्यतां तावत्कियन्मानं, लघु बृहद्वा, त्वयापेक्ष्यते । सा प्रत्यभाणीत्—। अल्पेनैव मानेन ममार्थः संपद्येत । तन्निशम्य कश्यपभार्या प्रत्युवाच—। क्षणमेकं प्रतिपालय । यावदहमभ्यन्तरान्मानमानये ।

९. अथान्तर्गता सा स्वगतं बभाषे—। जानामि खलु गाढमकिंचनत्वमलिपर्वणः । तस्य गेहे कुतो मानपर्याप्तो धान्यराशिः ? मानेन तस्य प्रयोजनं स्यात्—इत्येतद्विचिन्तयन्त्या मम, यत्सत्यं महान्विस्मयो जायते । मया पुनस्तत्कारणं चातुर्येण ज्ञातुं शक्यम् । एवं विचार्यासौ, अन्तर्मानं तलदेशे जतुलेशमासञ्जयामास । तच्च मानं यातरमुपनीयाब्रवीत्—। किं करोमि ? न मया मानं शीघ्रमासादितम् । येन त्वं कालप्रतीक्षां कारिता । एतत्त्वं क्षन्तुमर्हसि ।

---

## तृतीयो भागः

# भ्रातृद्वयम्

**अहो धनवतामेव धनलोभो निरन्तरम् ।**
**पश्य कोटिद्वयोपेतं लक्षाय प्रणतं धनुः ॥ १२ ॥**

१. अथालिपर्वणो भार्या गृहं निवृत्ता । स्वर्णमुद्राश्च मातुं प्रवृत्ता । सा तन्मानं मुद्राभिर्भूयोभूयः पूरयामास रेचयामास च । वेदिकायां च नातितुङ्गान्मुद्रोच्चयान्रचयामास । ततोऽन्यतमोच्चयगतानि सुवर्णानि सा संकलयामास । ततश्चैकीभूतः सुवर्णराशिः कतिमुद्रो भवेत्—इति सा बुबोध । एतदनुष्ठाय सा भर्तारमुपससार । तस्मै च मुद्रासंख्यां कथयामास । अनेन समयेन तस्य गर्ताखननं समाप्तप्रायमासीत् । यावच्चासौ कनकजातमगारत उद्यानमवहत्, तावत्सा मानं प्रत्यर्पयितुं गता । किंतु तया न लक्षितम्, यन्निष्क एको मानस्यान्तस्तले लग्नस्तिष्ठति—इति । अथ देवरभार्यामुपेत्याब्रवीत्—। मानं ते मया तूर्णमानीतम् । अनुगृहीतास्मि भवत्या मानं मानाय मह्यं ददत्या—इति । ततः सा गृहं प्रति निवृत्ता ।

२. कश्यपपत्न्या चिन्तितमासीत्—। यथा दैवतः प्राप्तं प्रभूतं किमपि धान्यं पिष्टं वा मातुं मानं मे यात्रा नीतं भवेत् । तस्यां च निष्क्रान्तायामेव, कश्यपवधूर्मानस्यान्तस्तलं पाणिना परामृशत् । तत्र च हेमनिष्कमासक्तमासाद्य विस्मयवशमयासीत् ।

३. तदा, निर्धनो मे देवरो धनमधिगतवान्—इति मत्वा सा न तुतोष । किंतु संजातमत्सरा भृशं विव्यथे । सा भूयोभूयः स्वगतं बभाषे—। कथं हताशौ मे देवरश्च याता च धनसंपदा न केवलमावयोः

साम्यं किंतु समधिकभावं स्पृशतः ? अहो अद्भुतम्, यद्भ्रातुर्मे काञ्चनस्य संचयः ! स च न संख्यया संख्येयः ! किंतु केवलं मानेन मेयः ! कुतोऽनेन देवहतकेन सर्वमिदं समासादितं स्यात् ?–इति तु दूरेण मे तर्कमतिवर्तते ।

४. समयेऽस्मिन्कश्यपो गृहे न संनिदधे । यथानित्यमखिलं दिनं पण्यशालायामतिवाह्य स प्रदोषे गृहं प्रत्यागमत् । भ्रातुर्विभवातिशयं श्रुत्वा भर्ता मे भृशं विस्मयेत–इति तया चिन्तितम् । किंच, तमधिकृत्य भर्तारं भाषितुं सा बलवदुत्कण्ठिता । तदागमनं च यावत्कथंकथमपि कालं यापयामास । चिन्तयामास च–। अहो मन्दं कालो व्रजति ! अथ चिरेण गृहायातं तं सा बभाषे–। मन्ये त्वमात्मानमलिपर्वणो धनीयांसं कलयसि । किंतु भ्रान्तिरेवेयं त्वदीया । स हि श्रीमत्त्वेन त्वत्तो भूयसातिरिच्यते । तदीयं धनं संख्यातिवर्तित्वान्मानेनैव परिच्छेदक्षमम् । एतदाकर्ण्य तां कश्यपः पप्रच्छ–। किमेतदुच्यते त्वया ? न खलु विभावयामि । स्फुटं कथय ।

५. एवं पृष्टा सा तमभाणीत्–। यात्रा मे मानभाण्डं याचित्वा नीतं प्रत्यानीतं च । मया च निपुणोपायेन किमेनया मितम्–इति ज्ञातम् । एवं भणित्वा सा तत्प्रत्यायनार्थं जातरूपनिष्कं तस्मै दर्शयामास । स तु निष्कः, पुरातनत्वान्मनुजकरादिना च भूयः स्पृष्टत्वात्तथा मसृणः संजातः, यथा तद्गतं राजमुद्रादिकं स न विभावयामास ।

६. गर्भेश्वरीं कन्यामूढवान्कश्यपः, दरिद्रं कनीयांसमात्मनो भ्रातरं न जातु सस्नेहमुपाचरत् । न वा किमपि साहाय्यं तस्यानुतष्ठौ । किं च सोदरोचितमादरपि तस्मै न दर्शयामास । उक्तं हि—

अधनाद्धि निवर्तन्ते ज्ञातयः सुहृदोऽर्थिनः ।
अपुष्पादफलाद्वृक्षाद्यथा कृष्ण विहंगमाः ॥ १३ ॥
धनमाहुः परं धर्मं धने सर्वं प्रतिष्ठितम् ।
जीवन्ति धनिनो लोके मृता ये त्वधना नराः ॥ १४ ॥

अतोऽधुना भ्रात्रा भाग्यतो लब्धं धनराशिमाकर्णयतः कश्यपस्य कुतः परितोषः ? केवलं तीव्रो मत्सरानलस्तस्य चेतसि संधुक्षितः । तौ दंपती, अलिपर्वाणमुद्दिश्य, ईर्ष्यारोषकलुषचेतसौ बभूवतुः । यत्सत्यम्, तमेवार्थं मनसि विपरिवर्तयन्कश्यपस्तस्यां निशि क्षणमपि निद्रां नालभत ।

अन्येद्युः प्रागेव प्रभातादुत्थाय स क्रोधपरुष एव महता संरम्भेण भ्रातुर्निवेशनं प्राप । तं चानुयुयुजे–। रे अलिपर्वन्, त्वं तावज्जनान्प्रत्याययितुं प्रयतसे–। यत्त्वमतीव दुर्गतः कष्टश्रितः, किं बहुना याचकनिर्विशेषश्च । धनं पुनस्ते न संख्येयम्, किंतु मेयम् । एतस्मिन्नलिपर्वा प्रत्युवाच–। आर्य, व्यक्तमुच्यताम् । नाहं त्वदुक्तं गृह्णामि ।

७. तदा कश्यपोऽब्रवीत्–। मद्वचसस्त्वमात्मानमगृहीतार्थं दर्शयसि । किंतु, किमनेन वाग्व्यवहारेण ? । एष निष्क एव त्वां गृहीतार्थं विधास्यति । एतावदुक्त्वा, भार्यादत्तं स्वर्णनिष्कं भ्रात्रे दर्शयित्वा कश्यपेन गदितम्–। निरूप्यतामेष निष्कः । एष तस्य मानस्याभ्यन्तरे लग्नोऽभूत्, यत्त्वद्भार्यया मद्गेहिन्याः सकाशान्नीतमासीत् । तद् ब्रूहि–। कियन्त ईदृशा निष्कास्त्वत्संनिधौ वर्तन्ते ।

८. एतन्निशम्यैवालिपर्वा विवेद–। यत्—आत्मनो धनागमवृत्तं मा कस्यापि विदितं भवतु–इति मयाभिलषितम् । तत्पुनर्मद्गृहिणीचापलात्कश्यपेन च तज्जायया च स्फुटं विज्ञातम्–इति । किंतु ‘ जातस्याजननं

नास्ति '—इति विचिन्त्य, विस्मयं वा विषादं वा लेशतोऽप्यनाविष्कुर्वन्स भ्रात्रे बभाषे—। आर्य सत्यमेतत्, यन्नाहं तथा दरिद्रो यथा केचिन्मां गृह्णन्ति। संप्रति हि यावन्मे धनं वर्तते तावत्कदापि मदीयं स्यात्—इति न जातु मया संभावितपूर्वम्। तदा कश्यपेनोक्तम्—। एतत्तु स्पष्टमेव। किमेतेन ज्ञातज्ञापनेन? एतत्तु वेदितुमिच्छामि, कुतस्त्वयेदं धनमाहृतम्? सहजेन प्रतिगदितम्—। अवधेहि। श्रावयामि त्वां मद्धनागमवृत्तम्।

९. एवं कृतप्रस्तावोऽलिपर्वाग्रजाय वर्णयामास—। वनगता चोरगुहा कीदृशी वर्तते। कथं च दैवयोगात्तेन सा दृष्टा। अब्रवीच्च—। रहस्यमेतद्रक्षितुं प्रतिजानीषे चेत्, अहं त्वामेतस्याः संपदः संविभागिनं करिष्यामि।

१०. कश्यपः साटोपं प्रत्यवादीत्—। अपेक्षितपूर्वमेव मयेदम्। एतत्त्ववगन्तुमिच्छामि—। सा गुहा कस्मिन्वनोद्देशे वर्तते। कैश्च लक्षणैः परिचीयते। येन यथाकाममहं तत्र गच्छेयम्। एतच्चेन्मम कथयितुं नेच्छसि, अहमेतमर्थं सपदि गत्वा नगरपालाय निवेदयिष्यामि। तथा सति न केवलं त्वं न पुनर्धनं लप्स्यसे, अपि च लब्धपूर्वमपि त्वत्तो नगरपालाज्ञया हरिष्यते। तन्मध्याच्च महतीमर्थमात्रां पारितोषिकमिति प्राप्स्यामि।

११. एतद्वचनमलिपर्वणो न मनागपि भयाय बभूव। स हि सहोदरे सदैव स्निग्धवृत्तिरेवासीत्। अतोऽधुनासौ कश्यपाय न केवलं तद्गुहायाः स्थानं लक्षणानि च, अपि तु तस्या अपावरणस्य संवरणस्य च मन्त्रौ व्याचख्यौ।

---

## चतुर्थो भागः

# गुहानिरुद्धः कश्यपः

**लोभाद्भवति संमोहः संमोहाद्भ्रंशते स्मृतिः ।**
**कर्माभावः स्मृतिभ्रंशात्स्यात्कर्माभावतो मृतिः ॥ १५ ॥**

१. एवं विदितवेदितव्यः कश्यपो गृहं निवृत्तः । अनुजन्मना प्रदत्तो धनसंविभागो न जातस्तस्य तोषाय। वाञ्छितं हि तेन–। यच्छक्यं चेत्, अलिपर्वणः पूर्वं गुहां तामासाद्य निखिलं तद्गतं वस्तुजातमात्मसात्कुर्याम् ।

२. एवं कृतमतिरयमन्येद्युः प्रत्यूषसि त्यक्तशय्यः, दश चक्रीवतः पृष्ठदत्तगोणिकान्विदधौ । तांश्चादाय गुहां प्रतस्थे । मार्गे चिन्तयामास–। अद्याहं गुहावर्ति धनं खरारोपितासु गोणीषु भृत्वाहरिष्यामि । किं च, अवशिष्टं चेत्, तदर्थं द्वितीयेऽवसरे यथापेक्षितान्रासभान्नेष्यामि–इति । अथालिनोपदिष्टं मार्गं गृहीत्वा तं वृक्षमुद्दिश्य चलितः, यस्मिन्नलिर्गूढोऽतिष्ठत्, यस्य च सविधे स गुहागिरिर्वर्तते स्म ।

३. ततश्च गुहाद्वारमासाद्य सोऽपाठीत्–

**स्कन्दराज नमस्तेऽस्तु चौर्यपाटवदेशिक ।**
**दस्युदेव द्वारमिदं विवृतं कृपया कुरु ॥ ८ ॥**

समनन्तरमेव द्वारं विवृतम्। कश्यपे चान्तः प्रविष्टे तत्स्वयमेव संवृतम्। अथ विपुलावकाशे तस्मिन्गुहागर्भे, तत इतो दत्तदृष्टिरसौ व्यचारीत्। भ्रात्रा कथितादपि च समधिकं धनोच्चयमद्राक्षीत् । यथायथा च तत्रासौ विचचार, तथातथा गरीयसि विस्मये मनोऽस्य मज्जति स्म । धनलोभपरवशः कश्यपः स्वर्णं तत्प्रेक्षमाणश्चिरमस्थास्यत् । किं तु सद्यस्तेन स्मृतम्–।

यदहमत्र न धनं दिदृक्षुः, किं तु धनं जिहीर्षुः, आगतोऽस्मि। एतदर्थं च वेसरदशकमपि मयानीतम्। ततोऽसौ दशवेसरपर्याप्ताः स्वर्णपूर्णाः प्रसेविका द्वारदेशमनयत्। यतस्ता बालेयपृष्ठानि सुखं शीघ्रमारोपयेत्।

४. अधुना तस्य मनो लप्स्यमानवित्तस्य दर्शनेन भृशं व्यग्रमासीत्। येन गुहाद्वारविवृतिमन्त्रं स सर्वथा विसस्मार। एतावदेव केवलं बुबोध यत्किमपि देवताविशेषाभिधानं मन्त्रे वर्तते—इति। अतः स रुद्रभैरववज्राङ्गादीनि कतिपयानि देवतानामानि व्याहार्षीत्। किं तु नैकेनापि द्वारविघटनं जातम्। यतस्तन्मन्त्रविशेषस्यैव पठनेन साध्यमासीत्।

५. अथात्मानं दस्युगुहायां निरुद्धमालोक्य कश्यपः सभयश्चिन्तयामास—। द्वारमेतद्वर्जयित्वा, अपरो बहिर्यानमार्गो नालोक्यते। घोरतरे खलु प्राणसंशये पतितोऽस्मि। व्यक्तमेष मत्प्रमादस्यैव दोषः। तथा चोक्तम्—

**न हि प्रमादात्परमस्ति किंचिद्वधाय पुंसामिह जीवलोके।**
**प्रमत्तमर्था हि नरं समन्तात्त्यजन्त्यनर्थाश्च समाविशन्ति ॥ १६ ॥**

अथ तदवस्थोऽयम्, उपद्वारमुच्चयीकृताः प्रसेविकाः सखेदं निपातयामास। मन्त्रं च स्मर्तुकामः, इतस्ततो बभ्राम। किन्तु स मन्त्रो नास्योपस्थितः। अश्रुतपूर्व इवायमस्य संवृत्तः।

६. अथ पूर्वाह्णविहारं समाप्य मध्याह्नवेलायां दस्यवो गुहामुद्दिश्य चलिताः। गुहाया नातिदूरमेव पृष्ठगतरिक्तगोणिकान्कश्यपखरांश्चरतो ददर्श। सपदि विस्मितचेतसस्ते सर्वे महान्तं जवमातस्थुः। सममेव च गुहामुखं प्रधाविताः। तत्क्षणं च तान्गर्दभानितस्ततो दूरं विद्रावयामासुः। तथा हि, एते गर्दभाः कुत्र गच्छेयुः?—इत्येतया चिन्तया किं तेषां प्रयोजनम्? केवलमेतदेव तैर्जिज्ञासितम्—क एतेषां स्वामी स्यात्—इति।

७. अथ तुरगावरूढास्ते खड्गानाचकृषुः । केचिच्च तैस्वैरैस्वामिनं बाह्यायां वृक्ष्यराज्यामन्विष्यन्ति स्म । यावत्तेषां मुखरः शेषैः सहचरैः सह द्वारमासाद्य विवृतिपद्यं पठितवान् ।

८. अतः पूर्वमेव, गुहान्तर्निरुद्धेन कश्यपेन सवेगमुपसर्पतां सप्तीनां खुरशब्दः श्रुत आसीत् । तेन चानुमितम्–। यद्दस्यवो निवृत्ताः–इति । मेने च–। अहमेतैश्चोरैर्ध्रुवं हन्तव्यः । तथापि मया यावच्छक्यमात्मा रक्षणीयः । उक्तं हि मनीषिभिः—

**अवश्यं प्राणिना प्राणा रक्षितव्या यथाबलम् ।**
**त्यक्तं न किं तांस्त्यजता रक्षितं किं न रक्षता ॥ १७ ॥**

अथ स्वप्राणत्राणार्थं तीव्रतरं यत्नमास्थातुं स निश्चिकाय । तदर्थं च, समुचितं स्थानमिति कृत्वा, स द्वारस्य पश्चिमं भागमभजत् । येन, विवृतमात्रे द्वारे स झटिति निष्क्रामेत् । चिरं सुस्मूर्षितोऽपि यो मन्त्रस्तं नोपस्थितः, तमेवासौ स्तेनपतिना प्रोक्तं सविस्मयविषादमाकर्णयामास । द्वारं च सद्यो विघटितमीक्षांचक्रे । अथ प्राणान्परीप्सुः पलायमानः कश्यपश्चण्डं वेगमाश्रित्य द्वारं प्रति प्रधावितः । प्रविशन्नेव दस्युमुख्यः, चण्डवेगेन तेन संघट्टमेत्य, तत्क्षणं भूमौ पपात । बहुभ्यः पुनस्तदनुचरेभ्यः कथं तेनात्मा रक्षितव्यः ? ते हि सर्वे खड्गपाणयो द्वारदेशमावृत्य तस्थुः । तैश्चासौ तत्क्षणं व्यापादितः ।

९. प्रविष्टमात्राश्चोरा गुहागर्भे परितो निपुणं निरूपयामासुः । कश्यपेन गर्दभारोपणार्थमुपद्वारमानीताः प्रसेविकास्तैरभ्यन्तरं नीताः । यथास्थानं प्रतिष्ठापिताश्च । किं तु प्रभूतत्वात्प्रसेविकानां तत्पूर्वमलिपर्वणापहृतानां तासां हानिस्तैर्नैव विज्ञाता । अथ तमेवार्थं चिन्तयितुं ते सर्वे एकत्रोप-

विष्टाः। एतत्तु तेषां स्फुटीभूतम्, यदन्तर्गुहं प्रविष्टः कश्यपो बहिर्गन्तुमसमर्थ आसीत्। किं तु कथं तेनात्र प्रवेशः कृतः–। इत्येव तैः परमार्थतो जिज्ञासितम्। तत्पुनस्तेषां सर्वथा दुरूहमेवासीत्।

१०. तत्र गुहायां प्रकाशप्रवेशार्थं रन्ध्रमेकमूर्ध्वदेशेऽवर्ततैव। किंतु गुहाशिखरस्योत्तुङ्गत्वाद्बहिर्भागे च भित्तीनामृजुत्वादूर्ध्वत्वाच्च प्रथमं तावद्रन्ध्रं यावन्नकोऽप्यारोढुं प्रभवेत्। अथ कथमप्यारुह्य रन्ध्रेण प्रविष्ट इत्यपि संभावितं चेत्तदपि विनावतरणसाधनं नैव संभवेत्। ईदृशं च रज्ज्वादि किमपि साधनं तत्र तेषां दृष्टिपथं नागात्। अतस्तैश्चिन्तितम्–। सद्यो हतोऽयं चोरो न रन्ध्रेणानेनावतीर्णः। तथा हि नात्र निःश्रेण्यादिकं किमपि वर्तते। भूयश्च प्रोचुः–। द्वारेणापि चोरप्रवेशो न संभवति। यतः, एतत्प्रवेशरहस्यमस्माकमेव विदितम्। तैर्न खलु ज्ञातम्–। यत्पूर्वस्मिन्नेवावसरे तदधिपोच्चारित उद्घाटनमन्त्रोऽलिपर्वणा निभृतमाकर्णितः—इति।

११. अथ सर्वैरपि तैरैकमत्येन व्यवसितम्–। यदत ऊर्ध्वं स वसुराशिस्तैः सुनिपुणमवेक्षणीयः। येन न कोऽपि तमपहर्तुं पारयेत्–इति। तदर्थं च तैर्निश्चितम्–। यत्कश्यपस्य देहो द्विधा कल्पनीयः। तस्य खण्डे चान्तर्भागे द्वारस्य पार्श्वयोरवलम्बनीये–इति। मतं हि तैः–। यथा तत्खण्डदर्शनेन भविष्यति काले तेषां कोशं स्प्रष्टुं न कोऽपि धृष्णुयात्। किं तु सर्वोऽपि जानीयात्–। तद्द्रविणापहारप्रयत्नः कां घोरां दशामावहेत्–इति।

१२. तथानुष्ठाय द्वारं च निपुणं पिधाय लुण्ठनेन धनमर्जितुं ते सर्वे भूयोऽपि चलिताः। नगरान्नगरं प्रवसतो वणिक्सार्थानवस्कद्यावलुण्ठ्य च, ते धनानि समाहरन्ति स्म।

## पञ्चमो भागः

# कश्यपशवोपलब्धिः

**अविवेकाद्भवेन्मृत्युः कार्यं सिध्येद्विवेकतः ।**
**कश्यपश्चालिपर्वा च मतावत्र निदर्शने ॥ १८ ॥**

१. अथ प्रवृत्तेऽपि प्रदोषे कश्यपमनागतं प्रेक्ष्य तद्गेहिनी महतीं चिन्तामाविशत् । ससंभ्रमं च देवरगृहं गत्वा बभाण–। देवर त्वया तु प्रायोऽनुमितं स्यादेव–। यद्भ्राता तेऽनुदित एवारुणे वनं प्रस्थितः । तत्प्रयोजनमपि तवावगतमेव । अधुना पुनः प्रवृत्तायामपि क्षपायां नासौ प्रत्यागतः । येन मानसं मेऽनिष्टमेवाशङ्कते ।

२. भ्रातुरतिमात्रमर्थलोलुपत्वं सम्यग्जानानोऽलिपर्वा प्रागेव चिन्तयामास–। यत्कश्यपोऽन्येद्युरेव चोरगुहां धनार्थं यायात्–इति । अत एव तद्धनविभागमुद्दिश्य तेन सार्धं कलहं परिहर्तुकामोऽसौ दिने तस्मिन् गृह एवावतस्थे । उक्तं हि—

**शतत्यागः कलेः श्रेयानिति स्यात्प्राज्ञसंमतम् ।**
**विना हेतुमपि द्वन्द्वमेतन्मूर्खस्य संमतम् ॥ १९ ॥**

उदारचरितत्वाच्च मन्यते स्म–। अखिलमप्युर्वरितं धनं भ्राता चेदात्मसात्कुर्यात्, न कामपि मदीयां हानिं कलयामि । प्राप्तपूर्वेण हि धनेन मया यावदायुः सुखेन जीवितव्यम् । प्रजावतीं च प्रकाशं प्रोवाच–। आर्ये, मन्ये–। तमःप्रवृत्तेः प्राङ्नगरप्रवेशो न क्षेमाय–इत्येव विचिन्त्य भ्राता मे निशाप्रवृत्तिमेव प्रतीक्षमाणः बहिर्विलम्बते । अतो मुहूर्तादिव तेन प्रत्यागन्तव्यम् । त्वया चात्र विषये न मनागपि चिन्ता कर्तव्या—इति ।

३. एतद्देवरोक्तं श्रुतमात्रं तस्याः प्रत्ययाय समाश्वासनाय च जातम्। यतो दृढं सा मेने–। यथा कोशगतं वृत्तं न लेशतोऽपि स्फुटीकर्तुं, प्रत्युत सर्वात्मना रहस्यमिति रक्षितुं युज्यते। अथ गृहं प्रत्यागत्य सा निशीथं यावज्जोषं प्रतिपालयामास। किंतु निवृत्तेऽपि निशीथे कश्यपो न निवृत्तः। तदा सा भूयोऽपि भूयसा दुःखाकुला बभूव। तस्याश्च दुःखोपचये, अयमसाधारणो हेतुरासीत्, यत्तया निजशोकहेतुर्न कस्मैचित्प्रकाश्यः। येन कियतापि तदाधिः सह्यतां यायात्।

४. तदा सा चिन्तयामास–। धिगस्तु मम चापलम्! मया हि यातुर्मौनप्रयोजनस्य हेतुं जिज्ञासमानया सकलोऽयमनर्थः स्वयमेवोत्पादितः। एवं तीव्रमनुशयाना सा शय्योपरि निशाशेषं क्षपयामास। प्रभातायामेव यामिन्यां देवृनिवेशनं वव्राज। तां म्लानवदनामालोक्यैव, अलिपर्वा तद्वधूश्च कश्यपमनिवृत्तं तर्कयामासतुः।

५. अथ प्रजावत्याः प्रार्थनामप्रतीक्ष्यैव, अलिपर्वोदतिष्ठत्। खरत्रयसहितश्च चोरावासं प्रातिष्ठत। प्रस्थितश्च भ्रातृपत्नीमुवाच–। यथा–धैर्यं मा त्यज। कश्यपः खलु क्षेमेण प्रत्यायास्यति। स्वगतं तु बभाषे–। व्यक्तम्, भ्राता मे धनाहरणे सम्यगविचार्यैव प्रवृत्तः। नान्यथा तस्यानिवर्तनं संभवति। शङ्के–। प्रायेणासौ चोरैर्गृहीतः स्यात्। तथा चोक्तम्–

**मधु यः केवलं दृष्ट्वा प्रपातं नानुपश्यति।**
**स शोचेद्भ्रंशमापद्य विवेकाच्च ततस्तटात्॥ २०॥**

विवेकशीलस्य पुनरन्यदेव भागधेयम्। कविर्भारविराह–

**सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।**
**वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव संपदः॥२१॥**

पथि स न कश्यपस्य न वा तच्चक्रीवतां किमपि चिह्नमद्राक्षीत्। येन मनस्तस्य तत्तदनिष्टं शङ्कते स्म। गुहामासाद्य द्वारं परितो रुधिरसेकं प्रैक्षत। येन संजातपूर्वा तस्यानिष्टशङ्का ववृधेतराम्। अथ विवृति-मन्त्रोच्चारणवशाद्विवृते द्वारे प्रतिपार्श्वमेकमिति भ्रातुः शरीरशकले अवलम्बिते तेन निरूपिते। तदा तस्य हृदये कियत्साध्वसं समुत्पन्नं स्यात्—इति न वाचा व्याख्यातुं, केवलं मनसोत्प्रेक्षितुं यदि किल शक्यं स्यात्।

६. किमधुना प्रतिपत्तव्यमिति सोऽह्नाय निश्चिकाय। तच्छवावगुण्ठ-नाय पटादिकं किमप्यन्वेष्टुं स गुहागर्भं जगाहे। बृहत्यौ प्रसेविके आदाय तदन्तः शरीरखण्डे निदधौ। ते च पटेनैकेन सर्वत आच्छादयामास। एवं सुगुप्तं तच्छरीरं गर्दभमेकमारोप्य तस्योपरि दारुभारं रचितवान्। अन्यौ च बालेयौ स्वर्णपूर्णौ स्यूतावारोप्य तद्गोपनार्थं तयोरप्युपरि काष्ठभारौ निदधौ। ततश्च मन्त्रेण द्वारं पिधाय निष्क्रान्तः। किन्तु, आ प्रदोषाद्वनान्त एव कालं यापितवान्।

७. अथ वासरे निवृत्ते तमसि च घनं व्यवगाहमाने स नगरं प्रविश्य गृहमाससाद। अथ कोशवाहौ गर्दभावङ्गण एव विससर्ज। यत्र तौ तद्भा-र्ययापनीतभारौ क्रियेयाताम्। तृतीयं तु रासभमारोपितभ्रातृशवं स सोदर-सदनं निनाय। तत्र प्राप्तोऽसौ द्वारं मन्दं ताडयामास। तच्च मारजन्या नाम गृहदास्या सादरमपावृतम्। सा प्राज्ञा च चतुरा च रहस्यरक्षणक्षमा चासीत्। अलिपर्वा तं गर्दभमङ्गणं निनाय। तत्र च तस्य पृष्ठतः प्रसे-विके अवरोपयांचकार। अथ मारजनिं रहसि प्रोवाच—। यदधुना मया वक्तव्यं तत्त्वया रहस्यमिति गोप्तव्यम्। अन्यथा तव स्वामिन्या मम च विनाशो ध्रुवः। स्वामी ते चोरैर्व्यापादितः। एते च प्रसेविके तच्छरीरं

धारयतः । किंत्वमुष्य दाहात्पूर्वमस्माभिस्तथा वर्तितव्यं यथा जनो गृह्णीयात्—। यदसौ गृहस्थित एव रोगवशादुपरतः । अत्रोपायकल्पने त्वमेव सर्वथा प्रमाणम्। गच्छ तावत् । स्वामिनीं च ब्रूहि—। देवरस्ते किंचित्त्वां वक्तु-मिच्छति—इति। मदुक्तं मनसा दृढं धारयस्व। सर्वं पुना रहस्यत्वेन रक्षणीयमिति निर्बन्धेन कथयामि ।

८. एवमादिष्टा मारजनिः स्वामिनीमुपेयाय। अलिपर्वा च तामनु-जगाम। देवरं दृष्टमात्रं सा पप्रच्छ—। किं वृत्तं ते भ्रातुः ? त्वदाकारस्तु विपरीतमेव किमपि गमयति। स प्रत्युवाच—। प्रजावति यदधुना मया-ख्येयं तत्त्वया रहस्यत्वेन रक्षणीयम् । नोचेदुभयोरप्यावयोर्ध्रुवो नाशः। किंतु प्रथमं त्वया शोकं निगृह्य मनः समाधाय मद्वचः सावशेषमकृत-फूत्कारमेव श्रोतव्यम्। तदा सा बभाण—। हन्त ! प्रस्ताव एष भर्तारं मे मृतं ज्ञापयति। एवं गतेऽपि वृत्तान्तमिमं सुगुप्तमेव धारणीयं कलये। अतः प्रस्तूयतां यद्वाच्यम्। अवहितास्मि।

९. एवं प्रचोदितोऽलिपर्वा जगाद—। गुहां गतोऽहं भ्रातरं मे घातितं तद्देहं च द्विधाकृतमुपलब्धवान्। अथ तच्छरीरार्धे गर्दभमारोप्यात्रानीतवान्। ते च प्रसेविकाद्वयान्तर्निहिते अङ्गणे वर्तेते। अथाधुना गृहगत एवासौ गदेन केनापि पञ्चत्वं गतः—इति लोके प्रकाश्य शरीरमिदमग्निदानेन संभावनीयम्। मन्ये—। एष कृत्यभारो मारजन्या एव हस्ते समर्पणीयः। मयापि यावच्छक्यं तस्याः साहाय्यमनुष्ठेयम्। एवं वचनमादाय रासभाद्देहार्धे अवरोप्य स रासभं तं निजावासं निनाय।

## षष्ठो भागः

# रहस्यरक्षणम्

**धनैर्जनं वशीकृत्य बिभ्रदाकारमीप्सितम् ।**
**पराभ्यूहं परिहरन्नरः सिद्धिमवाप्नुयात् ॥ २२ ॥**

१. अथान्येद्युरुषसि समुत्थाय मारजनिरगदवणिजमेकमाससाद । उवाच च–। त्वन्निर्मिताः सर्वरोगशमनीर्वटिका मह्यं देहि । सोऽपि ता वटिकास्तस्या उपाहरत् । अन्वयुङ्क्त च–। को रुग्णोऽस्ति ? एतस्मिन्सनिःश्वासं सा जगाद–। हन्त स्वामी मे स्वयं रुग्णोऽस्ति । किं च तस्य विकारो ज्ञातुमपि न शक्यते । स हि न किंचिदभ्यवहरति । न वा व्याहरति—इति । एतावदुक्त्वा वटिका गृहीत्वा सा निष्क्रान्ता ।

२. अथापराह्णसमये सोदश्रुमुखी भूयो भेषजापणिकमुपस्थायाब्रवीत्–। भद्र, शङ्के–। मद्गृहपतिरचिरेण परलोकं यायात् । तथापि मृतकल्पस्य संजीवनक्षमां महामृत्युंजयमात्रां मह्यं देहि । उक्तं हि–

**यावच्छ्वासं नैव जह्यात्प्रयासम्—**

इति । अन्यथा तु, एतानि वटिकागुटिकारसायनादीनि कियत्तस्योपकुर्युः–इति सुव्यक्तमेव । अतिमात्रं हि रुजा क्षीणत्वं मे स्वामिनः–इति । ततश्च लब्धागदा सा गृहं निवृत्ता ।

३. तस्मिन्दिने प्रभातादारभ्य प्रदोषसमयं यावत, अलिपर्वा तत्कुटुम्बिनी च विषण्णवदनौ कश्यपनिवासमार्गेण भूयोभूयो गतागतानि कुर्वन्तौ जनैरालोकितौ । अतः पूर्वरात्रे कश्यपवध्वा मारजन्याश्च भर्तुर्मरणं नामोद्दिश्य विलापाञ्श्रुत्वा, ते न मनागपि विस्मयं गताः । मुहूर्तादिव च मारजनिस्तेभ्यः स्वामिनं मृत कथयामास ।

४. सा जरन्तं कंचिच्चर्मकारं जज्ञौ। य इतरेभ्यः पूर्वतरमात्मनः कर्मशालामपावृणोत्। सापररात्रे महतः प्रत्यूषात्पूर्वमेव तं चर्मकारमुपतस्थौ। तस्य च सुप्रातमाशशंसे। तत्करे च स्वर्णनिष्कमेकं पातयामास। मुष्टवाहनामायं चर्मकारो नर्मशीलो वर्तते स्म। प्रतिकूलेऽपि व्यतिकरे न तस्य संतोषोऽहीयत।

५. पाणिपतितं निष्कं प्रेक्ष्य स सहर्षमुवाच—। अहो शुभं दिनमेतत्! मया हि प्रथमतरमेव निष्को लब्धः। स च सौवर्णः। किं चाप्रार्थितः। तदुपरि च पूर्वमेव कर्मानुष्ठानात्—इति। अथ मारजनिं ब्रूते—। त्वया मम सुप्रभातं न केवलं वाचाशास्यते, अपि च धनदानेन वस्तुतः संपाद्यते। ब्रूहि मृगनयने, मत्तः किमपेक्षसे? एषोऽहमुद्यतस्तदनुष्ठातुम्—इति। अथ सा बभाण—। आत्मनः सीवनोपकरणान्यादाय मामनुसर। किं तु त्वां प्रथममेव स्फुटं वच्मि—। यत्कमप्युद्देशं प्राप्य, अहं ते चक्षुषी पटावृते करिष्यामि। तत्त्वया सोढव्यम्—इति।

६. स चर्मकारः, एतदाकर्ण्य, क्षणं तत्कर्तुमनुत्सहमानो व्याजहार—। कच्चिदीदृशं किमपि कर्म न मां कारयसि यत्पापं वा मादृशानर्हं वा भवेत्? सपदि मारजन्या तस्य पाणौ निष्कान्तरं निहितम्। उक्तं च—। मा मैवम्। अयशस्करं वा भवादृशस्यानुचितं वा न किमपि कार्यं त्वत्तः प्रार्थ्यते। अतो वीतशङ्केन मनसा मामनुयाहि।

७. अथ स चर्मसंधाता तामनुवव्राज। मार्गे किंचित्स्थानमासाद्य सा तं वस्त्रेण दृढावृतलोचनं चकार। तदवस्थं च तं स्वामिगृहाभ्यन्तरगतं शयनागारं प्रावेशयत्। अपनीतनेत्रपटं च व्यदधात्। अस्मिन्नेवागारे मृतस्य गृहपतेः शरीरं स्थितम्। सा तं प्रार्थयामास—। भद्र मुष्टवाह,

परमां त्वरामास्थाय त्वयैते शरीरार्धे सेवनेन संधेये। अस्मिन्निर्वर्तिते तृतीयोऽयं निष्कस्त्वत्करगतः स्यात्।

८. एवं तया वाचा प्रार्थितः, विशेषतश्च निष्कान्तरप्रतिश्रवणेन प्रोत्साहितः, असौ चर्मसेवी सपदि कर्मणि प्रवृत्तः। शीघ्रं च तत्समापितवान्। यथाप्रतिज्ञं च निष्कमपि लेभे। तदनु सा पुनरपि तं पटावृतनेत्रं विदधौ। तं च व्यतिकरं रहस्यमिति रक्षितुं निष्कान्तरदानपूर्वं सनिर्बन्धं तमादिदेश। अथ सा तं तत्स्थानमनयत्, यत्र पूर्वमागच्छन् वसनपिहितनयनोऽयं विहितः। अत्र सा तच्चक्षुर्भ्यां वसनमपनिनाय। येन स स्वयं गृहं निवर्तेत। आत्मना तु गृहमुद्दिश्य चलितापि स्थित्वा, स्वगृहं प्रयान्तं तं चर्मकारं दृशा तावदनुययौ, यावत्स दृष्टिगोचरमतीतः। येन दूरगतत्वान्नायमिच्छन्नपि तामनुयातुं क्षमेत। शङ्कितं हि तया—। असौ कदाचिन्मम गृहं जिज्ञासुः, निभृतं मामनुसरेत्—इति।

९. तस्मिन्नेव दिने कश्यपस्य प्रेतसंस्कारो यथाविधि विहितः। तद्गतानि च तानितानि कर्माणि तथा नैपुणैनानुष्ठितानि, यथा सर्वोऽपि लोको मन्यते स्म—। यत्कश्यपः, आकस्मिकेनैव केनचिद् व्याधिना प्राणानुत्ससर्ज—इति।

१०. अथौर्ध्वदेहिकादनन्तरं त्रिचतुरदिनाभ्यन्तरे, अलिपर्वा सर्वानपि गृहोपस्करान्सोदरसदनं दिवा प्रकाशमवहत्। चोरगुहाधिगतं द्रव्यराशिं तु निखातोत्खातं नक्तं निभृतमनयत्। येन न कोऽपि तं जानीयात्। अथाल्पेनैव कालेन विधिवशात्तस्य सीमन्तिनी पञ्चत्वमगात्। ततः, अभिमतजायाविनाशदुःखितोऽसावचिन्तयत्—। दरिद्रमपि मे पूर्वगृहं गृहिणीसनाथत्वान्मम प्रीतये संवृत्तम्। नूतनमिदं पुनः समृद्धमपि भार्याहीनत्वान्न मे तोषमावहति। उक्तं हि—

**वृक्षमूलेऽपि दयिता यत्र तिष्ठति तद्गृहम् ।**
**प्रासादोऽपि तया हीनः कान्तारसदृशो मतः ॥ २३ ॥**

इति विमृश्य विवाहकामोऽसौ स्वजातीयसंप्रदायमनुसृत्य भ्रातृभार्यां विधवां विधिवत्परिजग्राह । संपन्नेन विवाहभोजनेन सर्वान्पौरान्प्रीणयामास च ।

११. अथ ज्येष्ठस्तस्य तनयः श्रीमतः कस्यापि वणिजः कर्मशालायां भृत्य आसीत् । तस्मै स कश्यपस्य पण्यशालां वितताार । व्याजहार च–। त्वं चेत्केवलं सर्वात्मनोद्यमं कुर्याः प्रभूतं धनं प्राप्स्यसि । येन त्वं श्रीमत्सु गण्यतां गमिष्यसि । तथाविधेनापि त्वया भूयान्स्वोत्कर्षः साधयितव्यः । तथा चोक्तम्–

**मास्तं गमस्त्वं लोकेषु विश्रूयस्व स्वकर्मणा ।**
**मा मध्ये मा जघन्ये त्वं माऽधो भूस्तिष्ठ गर्जितः ॥ २४ ॥**

## सप्तमो भागः

# दस्यूनामलिपर्वगृहोपलब्धिः

**को न याति वशं लोके मुखे पिण्डेन पूरितः ।**
**मृदङ्गो मुखलेपेन करोति मधुरध्वनिम् ॥ २५ ॥**

१. द्वित्रैर्वासरैस्ते लुण्ठका भूयोऽपि गुहामागताः । कश्यपस्य शरीर-मपनीतं कतिपयाश्च प्रसेविका अपहृता अपश्यन् । येन विस्मयोद्वेगस्तिमि-तास्ते बभूवुः ।

२. अथ तेषां नायकोऽब्रवीत्—। ज्ञाताः खलु वयं चोराः। अस्मत्कोश-गुप्तिस्थानमपि परस्य विदितम्। अत्रास्माभिः कोऽपि प्रतीकारोऽवश्यं कर्तव्यः। नोचेत्, न केवलमल्पाल्पश आत्मनो वसुसंचयः, किंतु जीवितान्यपि नश्येयुः। अतो जीवद्भिरस्माभिः प्राणानपि पणीकृत्य निजवित्त-हरणं रक्षितव्यम्। तथा चोक्तम्—

**स्ववित्तहरणं दृष्ट्वा यो जीवेदप्रतिक्रियः।**
**पितरोऽपि न गृह्णन्ति तद्दत्तं सलिलाञ्जलिम् ॥ २६ ॥**

मन्ये, इत्थमिदं संवृत्तम्—। यो नरोऽस्माभिर्हतः, तेन केनापि प्रकारेण गुहाप्रवेशरहस्यं विदितमासीत्। ततश्च निर्गन्तुमुद्यत एव तस्मिन् भाग्यादेव वयं गुहां प्रत्यागताः। पश्चात् केनापि तस्य शवो द्रव्यं च कियदप्यपनीते। तस्मादेतत्स्फुटं भाति—। यत्कश्चित्तस्य सहचरोऽपि प्रवेशरहस्यं जानाति। अतो जिजीविषुभिरस्माभिरकालहीनं स सहचरोऽन्वेष्टव्यः। एव-मुक्त्वा सोऽनुचरान्पप्रच्छ—। कथं वात्र यूयं मन्यध्वे ?

३. एतस्मिन्सर्वैरपि तैः समं भणितम्—। प्रसन्नस्ते तर्कः। इच्छा-मश्च—। यावदस्मद्रहस्यवेदी नरो नोपलभ्य व्यापादितः, तावदस्माभिः किमपि कार्यान्तरं न चिन्तनीयम्—इति।

४. अथ चोरपतिरनुचरानाह—। बाढम्। युष्माकं मध्ये य आत्मानं धीरं चतुरं निर्भयं च गणयेत्, तेनाध्वगवेषं परिधाय नगरं गन्तव्यम्। तत्र चान्वेष्टव्यम्—। यदि जनाः कस्यचित्पुरुषस्य, अकाण्डमरणमुद्दिश्य प्रलापपरा भवेयुः। एतावदुपलभ्य भूयोऽप्यन्विष्य जिज्ञासितव्यम्—। कोऽसौ मृतः पुरुषः, कश्च तस्य निवासः ?—इति। एतत्सर्वमविज्ञाय, अस्मिन्वस्तुनि वयं किमपि कर्तुं न समर्थाः। भूयोऽपि सोऽभाषिष्ट—। अवधार्यतां

भोः–। यदेतस्मिन्कार्ये प्रवृत्तो नरः, अनवधानाद्वा विधिनियोगाद्वा जनैः परिज्ञातश्चेत्, सर्वेऽपि वयं हतप्राया एव। अतो युष्माभिः सर्वैरपि प्रतिपत्तव्यम्–। यद्यः कोप्यस्मिन्साहसे प्रवृत्य वन्ध्ययत्नो भवेत्, सोऽस्माभिस्तत्क्षणं हन्तव्यः। अपीदमभिमतं भवताम्?। इति नायकेनोक्ते सर्वैरपि मोषकैः–उदारः कल्पः–इत्युक्त्वा तन्नायकवचनं सानन्दं प्रतिपन्नम्।

५. अथ तस्मिन्साहसे नायकेन नामग्राहं कस्यापि नियोगात्पूर्वमेव तेषामन्यतमः प्रोवाच–। स्वयमेवाहमेतस्मिन्कर्मणि प्रथमं प्रवर्ते। किं च स्ववर्ग्याणां कृते स्वजीवितं संशयमारोपयामि–इति चिन्तयन्यत्सत्यं धन्यमात्मानं कलये।

६. स चोराग्रणीरितरे च तं तस्य साहसाभ्युपगमं प्रशशंसुः। अथ स आत्मानं नेपथ्यादिभिस्तथा भूषयामास यथा न कश्चित्तं चोरं शङ्केत। ततोऽधिपतिं च सहचरांश्चापृच्छ्य स पुरमुद्दिश्योदचालीत्। तत्र च, उषःकाल एव संप्राप्तः। अथ तत्र नगरे रथ्यायामितस्ततो भ्रमन् स पूर्वोक्तस्य मुष्टवाहनाम्नश्चर्मकारस्य कर्मशालामपावृतां ददर्श। या यथोक्तपूर्वं तत्स्वामिना, अन्यापेक्षया प्रागेव प्रत्यहमपाव्रियते स्म।

७. तदा स चर्मकारः काष्ठपीठोपविष्टः, आरां करेणादाय कर्मणि प्रवर्तितुमुद्यत एवासीत्। यावत्स चोरस्तमुपस्थाय ‘सुप्रभातं ते भूयात्’ –इत्युवाच। तं च परिणतवयसं दृष्ट्वा स बभाषे–। आर्य, कथमेतावति प्रत्यूष एव कर्मणि प्रवर्तसे? कथमिदं संभवति–यत्त्वादृशो जीर्णो नरः, अनुदित एव दिनकरे, गुणेन चर्म सेवितुं प्रभवति? यस्मात्त्वादृशस्य जरठस्य चक्षुषी, भास्वति भृशं भासमानेऽपि नैव सीवनसमर्थे भवेताम्।

८. एतस्मिन्मुष्टवाहः प्रत्यवदत्–। एतत्त्वदुक्तं व्यक्तं त्वामागन्तुकं कथयति। अहं हि दशः पाटवान्मत्तो वर्षीयसोऽपि जनानतिशये। प्रतिजाने ते–। यन्मया नातिचिरात्प्रागेव, इतोऽपि मन्दप्रकाशे देशे, शवः कश्चित्सेवनेन संहितः।

९. ततो दस्युरसौ स्वगतं बभाषे–। अहो शोभनमापतितम्! यत्–मया प्रथमतरमेव स एव नरो दृष्टः, यो मह्यमीप्सितं वृत्तं कथयितुं समर्थः स्यात्। प्रकाशं चोवाच–। किं ब्रवीषि? शवः संहितः इति? अथ शवस्य संधानेन किं प्रयोजनं स्यात्? मन्ये, न शवः संहितः, किंतु शवाच्छादनपटः–इत्येव तव विवक्षितम्। चर्मकारः प्रत्याह–। मा मैवम्। यथाहं यद्वक्तव्यं तन्मनसा सम्यग्जानामि, तथा यदेव वक्तव्यं तदेव वाचा व्याहरामि। मन्ये—। सर्वमेतद्गतं वृत्तं त्वं ज्ञातुमिच्छसि। येन जानन्नपि विपरीतमित्थं शङ्कसे। नाहं पुनरेवमतिसंधेयः। तुभ्यं च न किंचिदधिकं कथयिष्यामि।

१०. एतदाकर्ण्य चोरस्यायं प्रत्ययो दृढतां गतः–यत् स चर्मकारस्तेन जिज्ञासितमर्थं कथयितुं प्रभवेत्–इति। अथ धनग्रन्थेर्निष्कमेकमादाय मुष्टवाहस्य हस्ते निक्षिप्य सोऽब्रवीत्—। भद्रमुख, त्वद्रहस्येन ज्ञातन मम किं प्रयोजनम्? तथाप्येतद्ध्रुवं ज्ञातुमर्हसि यत् कथितं चेत्त्वया, तद्रहस्यं न मया कस्मैचित् प्रकाशयितव्यम्। एवं सति, केवलं कुतूहलवशान्मया प्रार्थ्यसे–। मह्यं तद्गृहं दर्शय, यत्र त्वया शवसंधानं कृतम्।

११. अथ निष्कं तं तस्मै नवागताय प्रत्यर्पयितुं किलोद्यतः करे धृत्वा, मुष्टवाहः प्रत्यब्रवीत्–। प्रथमं तावत्, तद्गृहं तुभ्यं दर्शयितुमेव मया नेष्यते। अपरं च दर्शयितुमिच्छतापि सता, तथा कर्तुं मया न शक्यते। यतस्त-

देहं नीयमानोऽहं कंचिद्देशमासाद्य पटावृतलोचनो विहितः। तदवस्थश्च शवगृहं प्रवेशितः। कृतशवसंधानश्च पुनरपि पटावृतनेत्र एव तमेवोद्देशं प्रतिप्रापितः। अतस्त्वमेव जानीयाः—। यदर्थं ते संपादयितुं न मया पार्यते।

१२. अथ चोरो जगाद—। बाढम्। मन्ये पुनः—वस्त्राच्छन्ननेत्रोपि गतपूर्वमध्वानं कियदपि गन्तुं शक्नुयाः। अतस्त्वं मां तं देशं प्रापयेः, यत्र पूर्वं त्वं संवृतनेत्रः कृतः। तत्र प्राप्तं त्वामधुनापि पटाच्छन्नचक्षुषं विधास्यामि। ततश्चावां, यावती रथ्याश्चोपरथ्याश्च गतपूर्वास्त्वं स्मरेः, तावतीराक्रमिष्यावः। इदं च व्यवहितार्थस्यापि दर्शकं निष्कान्तरं गृहाण। मन्ये—। मदर्थं प्रयस्यतस्तव तोषस्यापि जनकमिदं स्यात्। सर्वो हि कृतस्य परिश्रमस्य कृते पारितोषिकमवश्यं लम्भनीयः।

१३. तदा निष्कपाणिर्मुष्टग्राहः क्षणं विचारयन् स्थितः—। किं मयाधुना प्रतिपत्तव्यम् ?—इति। स हि न वा तस्मा अभ्यागताय मार्गं दर्शयितुमैच्छत्, न वा तं हेमनिष्कं हातुमुदसहत। स प्राप्तपूर्वं सद्योलब्धं चोभावपि निष्कौ करतलगतौ स्निग्धं निदध्यौ। न पुनः क्षणं निश्चयमगात् प्रतिपत्तिमन्तरेण। क्षणान्तरे जातनिश्चयोऽसौ, उरोनिहितं स्यूतमाकृष्य विवृतमुखं विदधौ, तस्मिंश्च निष्कद्वयं निदधौ। दातुश्च संमुखीभूय बभाषे—। अखिलो मार्गो मया स्मर्तुं शक्यः—इति नालमस्मि तुभ्यं प्रतिज्ञातुम्। तथापि बलवतीं तवेच्छामनुरुध्य यथाशक्ति प्रयतिष्ये।

१४. एवं वचनमादाय स स्वकर्मशालां यथास्थितमेव विवृतां विहाय, तेन चोरेण सहोच्चचाल। यतस्तस्यां शालायां स्तेयार्हं बहुमूल्यं वस्त्वेव

किमपि नासीत्। अथ किंचिदन्तरं गत्वा मुष्टग्राह उवाच। एतदेव तत्स्थानम्, यस्मिन्नितोमुखस्य मम लोचने वसनपिहिते विहिते। अथ स चोरः, तत्क्षणं स्वकरवस्त्रमादाय, तेन चर्मजीविनो नयने बबन्ध। एवमन्धीकृतं तं स स्वहस्तेनादाय निनाय। चर्मकारोऽपि चोरस्याज्ञातमार्गत्वात्तस्य मार्गमुपदिदेश। एवं पर्यायेण परस्परप्रेरितौ तौ किंचिदन्तरमाक्रामताम्। यावत्स चार्मिकः स्थितः।

१५. स्थित्वा च सोऽवादीत्—। नाहमतः परतरं गतः—इति। एतच्च तदुक्तं यथार्थमेवासीत्। तदानीं हि स तस्यैव गृहस्य पुरः प्राप्तः, यत्र संप्रति सोऽलिपर्वा पुनर्भ्वा कश्यपवध्वा सह वसतिमकरोत्। अथ क्षणं मुष्टग्राहोऽनपनीतनेत्रावरण एव स्थापितः। यावत् स चौरो गैरिकखण्डेन तद्गृहद्वारफलके त्रिशूलचिह्नमकरोत्। चर्मकारं चापनीतनेत्रबन्धं विधाय सोऽप्राक्षीत्—। भद्र, कस्येदं गृहम्? स तु प्रत्युवाच—। नाहमेतत्स्वामिनं वेद्मि। अहं हि सुदूरचत्वरवासी।

१६. अथास्माच्चर्मकाराद्बोद्धव्यं किमपि नावशिष्टम्—इति मत्वा स तस्मै गृहगमनाय मुमोच। मुच्चंश्चोवाच—। बहूपकृतं त्वया मे—इति। आत्मनो जिज्ञासां सफलां प्रेक्ष्य स चोरः परितुष्टः। स्वीयां सिद्धिं वनगताय नायकाय निवेदयितुं सत्वरं प्रस्थितः। मेने च—। मदीयमिदं चेष्टितमाकर्ण्य मत्सहचरा अपि मया समं तुष्येयुः—इति।

## अष्टमो भागः

# यत्नस्य वैफल्यम् ।

**शूरः शूरतरं प्राप्य बुद्धिमान्बुद्धिमत्तरम् ।**
**पटुश्चापि पटीयांसं न सिद्धिं प्राप्तुमर्हति ॥ २७ ॥**

१. चोरचर्मकारयोः प्रस्थानात् समनन्तरमेव, किंचित् कार्यमुद्दिश्य मारजनिर्मन्दिरान्निर्जगाम । अथ निवृत्ता सा द्वारि त्रिशूलचिह्नं निर्मितं प्रेक्ष्य तन्निपुणं निरूपयामास । चिन्तयामास च—। चिह्नमिदं किमावेदयति ?—इति तर्कयन्त्या मनो मे भयविस्मयवशं जायते । मत्स्वामिनोऽशुभं ध्यायता केनापि नरेण, तं वा विडम्बयितुकामेन बालेन, चिह्नमिदं विहितं स्यात् । यथा तथा वा भवतु । मया पुनरशुभमेवोत्पश्यन्त्या तथा वर्तितव्यम्, यथा स्वामिनो मे न किंचिदनिष्टमस्मादुत्पद्येत ।

२. एवं विचार्य सापि गैरिकखण्डमेकमाहरत् । तेन च तद्गृहस्य पार्श्वयोः कतिपयगृहद्वारेषु तादृशमेव त्रिशूलचिह्नं लिलेख । किंतु तद्वृत्तं न स्वामिने न वा स्वामिन्यै लेशतोऽपि निवेदयामास । अनेन समयेन स चोरो वनगतैर्वयस्यैः समियाय । तेभ्यश्च वर्णयामास—। कियती सिद्धिस्तेनासादिता, कथं च स तमेवैकं पुरुषं प्रथममेव भाग्यतो ददर्श, यस्तेन जिज्ञासितं रहस्यमाख्यातुं समर्थ आसीत् ।

३. तत्कथितं वृत्तमाकर्ण्य ते सुतरां प्रीताः । तेषां परिवृढश्च तस्यान्वेषणनैपुणं प्रशशंस । अनुयायिनां च संमुखीभूयाभाषत—। भो वयस्याः, सर्वैरेवास्माभिः सुसंनद्धैरविलम्बितं प्रस्थातव्यम् । किंत्वस्माभिः, द्विशस्त्रिशो वा, विविधैर्वर्त्मभिः पुरं प्रवेष्टव्यम् । मा वयं केनापि चोरा इति शङ्कितव्याः ।

प्रवेशात्समनन्तरमेव सर्वैरपि युष्माभिः प्रधानचत्वरे समागन्तव्यम् । अस्मिन्नन्तरे शुभवृत्तस्याहारकेणानेन सहचरेण सार्धं नगरं प्रविश्य तद्गेहं द्रक्ष्यामि । अनन्तरकरणीयं च निश्चेष्यामि ।

४. एष विधिः—' प्रशस्यतरः '–इति सर्वैरप्यभिनन्दितः । अचिरेणैव ते गमनोद्यता बभूवुः । अथ यथासंकल्पं द्विशस्त्रिशो वा विभक्ताः प्रथमगणादनन्तरं द्वित्रैः क्षणैर्द्वितीयो गणः, ततश्च तावतैव समयेन तृतीयः, ततोऽपि तथैव चतुर्थः, एवं क्रमेण प्रस्थाय सर्वेपि ते विभिन्नैर्वर्त्मभिर्विभिन्नकालं नगरं प्राविशन् । येन जनानां शङ्काविषयतां नापन्नाः । अथ नेता तेन वार्त्ताहरेण सह तां गृहवीथिमाससाद, यत्रालिपर्वणो गेहमवर्तत । अथ तौ मारजन्या त्रिशूलेनाङ्कितद्वाराणां गृहाणां प्रान्तगतमेकं प्राप्तौ । मदङ्कितमेवेदम्–इति भ्रान्त्या मत्वा दूतः सद्म तन्निर्दिश्य नायकं स्वैरं बभाषे–। इदं तद्गेहमिति ।

५. किन्तु तद्गृहस्य पुरस्तौ न व्यलम्बेताम्–। नावां जनस्य शङ्काभाजनं भवेव–इति । अथ किंचित्पुरो गत्वा, अनन्तरे गृहे तदेव लक्ष्म लक्षयित्वा नायको दूतमप्राक्षीत्–। भद्र, कतरत्तद्गृहम् ? एतद्वा पूर्वं वा ? इति । स तु तद्गृहद्वयं तुल्याङ्कं प्रेक्ष्य विस्मयं जगाम । भूयश्च पुरो गत्वा, अनन्तरं गेहम्, तस्याप्यनन्तराणि कानिचित्, ततोऽपराण्यपि कतिचित्, तदेकचिह्नचिह्नितानि निरूपयामास । बलवद्विस्मयाक्रान्तहृदयश्च किंवक्त, व्यतामूढः संजातः ।

६. अथासौ नायकं सशपथं प्रोवाच–। मयैकस्मिन्नेव गेहे चिह्नं निर्मितम् । शेषेषु तु गृहेषु तत्तुल्यं चिह्नं केन विहितम्–इति न जाने । चिह्नानां च सर्वथा सदृशत्वान्मन्निर्मितं चिह्नमेव नालमस्मि ज्ञातुम् ।

कुतः पुनस्तदभिज्ञेयं शत्रुगेहं निर्धारयितुम् ?—इति । एतदाकर्ण्य स स्तेनपतिः स्वप्रयोगं विफलं प्रेक्ष्य व्यमनायत । अकालक्षेपं च संकेतस्थानमासाद्य प्रथमदृष्टं चोरं बभाषे—। यथा—वन्ध्य एवास्माकमितःप्रवासप्रयासः । यथागतं सुनिभृतमेवास्माभिर्गुहां प्रतिनिवर्तितव्यम्—इति ।

७. अथ प्रदोषकाले गुहायां सर्वस्मिंश्चोरव्राते मिलिते स दस्युनायकः किंकरेभ्यः सिद्धिविपर्ययस्य कारणं व्याचख्यौ । तन्निशम्य तैर्निश्चितम्—। यत्कृतं समयमनुसृत्य विफलप्रयासोऽयं सहचरोऽस्माभिर्हन्तव्यः—इति । सोऽपि तं निर्णयं वीरवदभिनन्द्याब्रवीत्—। सर्वथा युक्तमेतन्मम । अहं हि गुरुतरावधानेन व्यवाहरिष्यं चेत् कुतो मे प्रबन्धो वन्ध्यतामयास्यत् ? ततश्चासौ भूतलन्यस्तजानुरवाङ्मुखः, एकेनैव खड्गप्रहारेण लोकान्तरं प्रस्थापितः ।

## नवमो भागः

# चोरधुर्यप्रबन्धः

**आत्मवत्सर्वभूतानि पश्यन्तः साधवोऽमलाः ।**
**न खलांश्छद्मबहुलांस्तत्त्वतो वेदितुं क्षमाः ॥ २८ ॥**

१. यावद्गुहारहस्यवेदी नरो नासाद्य व्यापाद्यते तावद्दस्युचक्रं न वीतभयं स्यात्—इति विचिन्त्य अपरश्चोरस्तदन्वेषणं प्रतिज्ञातवान् । पूर्वगः सहचर इव सोऽपि तमेव चर्मकारमुपेत्य तं चोपायनेन वशीकृत्य ततश्च जिज्ञासितं गेहं जज्ञौ । तदीयद्वारे दूरोच्छ्रिते दुर्लक्ष्यदेशेऽरुणचूर्णेन लघुलक्ष्म निर्ममौ च ।

२. एवं सत्यपि, कर्म किंचिदनुष्ठातुकामा बहिर्गत्वा प्रतिनिवृत्ता शश्वदप्रमत्ता मारजनिः, तार्क्ष्यदृष्टित्वाद्द्वारगतं सूक्ष्ममपि तदरुणं लक्ष्म लक्षयामास। यथापूर्वमिदमपि मत्स्वामिनमभिद्रुह्यता केनापि नरेण विहितं स्यात्—इति शशङ्के। अथ तस्य सवर्णं सदृशं समाकारं च लक्ष्म दक्षिणतश्च वामतश्च प्रत्यासन्नेषु कतिपयेषु सदनेषु प्रत्येकं निर्ममे। सोऽपि चोरः स्वीयां दक्षतामन्तः श्लाघमानः स्वनिवासगुहां निवृत्तः। मेने च—। विपक्षक्षयं ज्ञातुं ध्रुवमहं समर्थः स्याम्—इति। तदुपदिष्टस्तेषामग्रेसरोऽपि सानुगः, अस्मिन्नवसरे पाणिपतितामिव कार्यसिद्धिं कलयामास।

३. ते सर्वेऽधुनापि तन्नगरं यथापूर्वमजनितजनशङ्कमेव प्राविशन्। अथ चोराधिष्ठाता तेन चरेण साकमलिपर्वणो गृहसमीपस्थां रथ्यां प्राप। किंत्वस्मिन्नपि समये पूर्व एवान्तराय उपस्थितः। तथाहि रक्तपिष्टलक्ष्माङ्कितानि नैकानि गृहाणि ताभ्यां वीक्षितानि। येन स दस्युवरिष्ठः परां कोटिं कोपस्याधिरूढः। तन्मार्गोपदेशकश्च भूयसा विस्मयपरवशो जातः। अतोऽस्मिन्नपि द्वितीये वारे, असिद्धार्थानां तेषां निवृत्य गुहागमनादन्यत्किमपि शरणं नासीत्। सर्वे च ते प्रतिपत्तिशून्या बभूवुः। असौ द्वितीयोऽपि मार्गोपदेष्टा प्रथमगतेन सहचरेण समायातुमिव तद्गतेनैव पथा यमावासं प्रेषितः।

४. अथ चोराधिपश्चिन्तयामास—। शत्रूच्छेदाय चेष्टमानः पूर्वमेकः सहचरो हतः, अधुना चायमपरः। एवमेतेषु व्यापृतेषु मद्वयस्यगणो दिने-दिनेऽल्पतां व्रजन्नामशेषो भवेत्—इति शङ्के। तदलमेतदनुचरकल्पितेनोपायेनानुसृतेन। अधुना मयैवात्मना प्रबन्धो विधेयः—इति। ततोऽसौ विपक्षमार्गणकार्यं स्वयमभ्युपेयाय।

५. अथासौ नगरं वव्राज। स्वर्णदानेन वशीकृतेन मुष्टवाहेन सार्ध-मलिपत्रेणो गेहमाससाद। स तु तत्र कुत्रापि किमपि लक्ष्मादिकं न विदधौ। तद्गेहस्य तु तांस्तान्विशेषान्, तस्य पुरो मुहुर्गतागतानि कुर्व-स्तथा निरूपयामास, यथा स निश्चयं गतः—यदेतद्गृहाभिज्ञाने न जातु प्रमाद्यामि।

६. भूयोऽपि विपिनमासाद्य सहचरान्मेलयित्वा सोऽभाषत—। वयस्याः, तद्गृहं मया दृढं परिचितम्। येन वैरनिर्यातनेऽस्माकं न कोऽप्यन्तरायः स्यात्। इतोमुखं चागच्छता मया कोप्युपायोऽपि कल्पितः। येनास्माकं ध्रुवा सिद्धिः स्यात्—इति मे मतम्। तथापि तमुपायं युष्माञ्श्रावयिष्यामि। तस्मिन्नाकर्णिते ततोऽपि पटीयानुपायो युष्माकं कस्यचित्स्फुरेच्चेत् तमपि श्रोष्यामः।

७. अथासौ चोरकर्णधारः, चिन्तितमुपायमनुचरेभ्यो व्याचचक्षे। तैश्च—मूर्धन्योऽयम्—इत्युक्त्वा सोऽभिनन्दितः। ततस्तमुपायमनुतिष्ठासुः सोऽनुचरानादिशत्—। समीपवर्तीनि ग्रामनगराणि गच्छत, तत्र च नव-दशाश्वतरान्, ततो द्विगुणानि चातिमहान्ति दृतिभाजनानि क्रीणीत। तेषां चैकतमत्तैलेन पूरयत—इति।

८. द्वित्रदिनावधौ तैः कुम्भीलकैः, यथापेक्षं चर्मकुम्भाश्चाश्वतराश्च क्रीत्वा गुहामानीताः। अनन्तरं स चोरधुर्यः, सर्वानप्यनुचरान्यथोचितैः शस्त्रैः संनाह्य सप्तत्रिंशति कुम्भेषु, प्रतिकुम्भमेकः, इति स्थापयामास। तेषां च कुम्भानां बहिर्भागांस्तैलकुम्भात्तैलमुद्धृत्य तथाभ्यानञ्ज, यथा ते सर्वे तैल-पूर्णा इवाभासेरन्।

९. ततोऽन्येद्युः प्रातरेव, पुरुषगर्भान्सप्तत्रिंशतं कुम्भान्, तैलगर्भं चाष्टात्रिंशं, नवदशानामश्वतराणां पृष्ठानि, प्रत्यश्वतरं द्वाविति, आरोपयांचकार। ततः स चोरमुख्यो नियन्ता नाम भूत्वा, साश्वतरो नगरमुद्दिश्य प्रस्थितः। तत्र च यथासंकल्पं तमःप्रसरवेलायां प्राप । तानश्वतरान्नगरे मार्गान्मार्गं प्रेरयन्, सोऽलिपर्वणो गृहमाससाद। स तु सद्यःकृतभोजन उपद्वारदेशमेव धूमवर्त्तिं परिपिबन्नतिष्ठत्।

१०. स चोराधिपो गृहस्याग्रेऽश्वतरान्स्थापयित्वा, अलिपर्वाणमुपस्थायाभ्यर्थयामास। भद्र, दूरदेशान्मया प्रभूतं तैलं चर्मपात्रभृतं विक्रयार्थमानीतम्। एतच्चापणे श्वो विक्रेतुमिच्छामि। अस्यां तु प्रदोषवेलायां कुत्र मया स्थेयम्, क्व वा चर्मपात्राणि स्थापनीयानि–इति निश्चेतुं न पारयामि। यतः, आगन्तुकत्वात्कमपि पौरं नाहं परिचिनोमि। अतः, अत्र ममावस्थानं नातिपीडाकरं मन्यसे चेत्, इमां निशामिह वसन्तं मां सोढुमर्हसि। अस्मिंस्तव गृहाङ्गणे सुखेन निद्रास्यामि। प्रत्यूषस्येव, अश्वतरान्विपणिं नेष्यामि। तत्र चान्यवणिग्भ्यः पूर्वमेव तैलमवतारयिष्यामि। येन मया तत्तैलं भूरिलाभं विक्रेतुं शक्यम्। अतः, निशावासमुद्दिश्य मदीयमभ्यर्थितं ग्रहीतुमर्हसि। येन भृशं त्वदुपकृतो भवेयम्।

११. असौ चोराध्यक्षोऽलिपर्वणा कानने विचरन्वीक्षितः, ब्रुवंश्चाकर्णितः। एवं सत्यपि वणिग्वेषधारिणं तं स न वेषतो न वा शब्दतोऽप्यभिजज्ञौ। अतोऽमुं मायावणिजमब्रवीत्–। एतां रात्रिमत्र प्राङ्गणे तैलभाण्डानि सुखं स्थापयेः। त्वं तु गृहाभ्यन्तरे तिष्ठेः। अतिथिसत्कारो हि धर्म एव गृहस्थस्य। किंच भवान्सूर्यास्तमनवेलायां प्राप्तोऽतिथिः। येन मे विशेषतः सत्कार्यः। उक्तं हि—

**संप्राप्तो योऽतिथिः सायं सूर्योढो गृहमेधिनाम् ।**
**पूजया तस्य देवत्वं प्रयान्ति गृहमेधिनः ॥ २९ ॥**

अपरं च प्रभातात्पूर्वमेव त्वया गन्तव्यम् । येन नाल्पोऽप्युपरोधो मम स्यात् । एवमुक्त्वा स भाण्डवाहकानामश्वतराणां प्रवेशार्थं द्वारमपावृणोत् । अथ गृहदासमेकमाहूयादिदेश–। अपनीतभाण्डानेतानश्वतरान्गोष्ठेऽवरुन्द्धि । तत्र च प्रभूतं धान्ययवसादिकं तेभ्यो देहि–इति । एवं तेन कूटवणिजा पेशलोदारया वाण्या स्वार्थः संपादितः । तथा चोक्तम्—

**गौर्गौः कामदुघा सम्यक्प्रयुक्ता स्मर्यते बुधैः ।**
**दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसति ॥ ३० ॥**

१२. अथाभ्यन्तरं गत्वा स दासीं मारजनिमाज्ञापयत्–। प्राघूर्णकार्थं स्वादूष्णमाहारं संस्कुरु । मृदुविस्तीर्णं च तल्पं कल्पय–इति । वणिजं चोपरथायाभ्यधात्–। भवता प्रविश्य गृहमिदं सनाथीकरणीयम् । नाहं भवन्तं सर्वरात्रमङ्गणेऽवस्थितं द्रष्टुमुत्सहे । किं पुनः शयितम् ? प्रथमं तावन्मया दत्तं भोजनं स्वीकुरु । अनन्तरम्....। एवंवादिनोऽस्य वचनमाक्षिप्य वणिगुवाच–। अद्य भट्टारकवारे न मया नक्तं भुज्यते । अतः, अलं ते मदर्थमाहारपचनेन । अन्यदातिथ्यं तु मया सानन्दं प्रतिग्राह्यम् । तदाकर्ण्यालिर्मारजनिमुपेत्य प्रोवाच–। प्राघुणकोऽयं न नक्तं भुङ्क्ते । अतस्तदर्थे त्वया पाको न कर्तव्यः । भूयश्च बभाषे–। श्वो महत्येव प्रत्यूषे मया स्नानाय गन्तव्यम् । अतो मदीयं स्नानवस्त्रादिकं पिण्डीकृत्य भृत्याय समर्पय–इति । मम प्रत्यागमनकाले पेयमपि किमपि पक्त्वा धारय । येन स्नानादागतोऽहं तत्पिबेयम् । एतद्वचनमादाय स शय्यागारं प्रविष्टः ।

१३. अथासौ चोरपुरोगः 'अश्वतरान्सुस्थितान्द्रष्टुमङ्गणं गच्छामि'–इत्युदित्वा बहिर्गतः । स हि स्वप्रबन्धस्य निर्वर्तनमुद्दिश्य सहचरानुपदेष्टुमियेष। स गोष्ठं गत्वा ततश्चाङ्गणं निवृत्य प्रथमां कुतूमासाद्य तद्गतं चोरं स्वैरं बभाषे–। अहमत्राभ्यन्तरे शालायां स्वपिमि । तत्रस्थश्चाहं कांश्चिदुपलखण्डान्कुतूपरि क्षेप्स्यामि । तांश्चाकर्ण्य त्वया छुरिकया शिखरादारभ्य तलं यावत्कुतूः पाटनीया । ततश्च क्षणान्निर्गन्तव्यम् । सममेवाहमप्यागत्य, अनन्तरकरणीयं तवोपदेक्ष्यामि–इति । शेषाण्यपि चर्मपात्राणि स एकैकश आसाद्य, तत्रगतान्पुरुषांस्तथैवादिश्य गृहान्तः प्रविष्टः ।

१४. ततो मारजनिर्दीपहस्ता तस्मै तदर्थमुपकल्पितं शयनं दर्शयामास । प्रार्थयामास च–। अपि वस्तुना केनचित्कार्यं भवतः ?–इति । न केनापि–इत्युत्तरमाकर्ण्य सा निववृते । सोऽपि चोरवर्यः शय्यागारगतं दीपं निर्वाप्य, तल्पमधिशिश्ये । किं तु स्वप्रयोगनिर्वहणसमयं प्रतीक्षमाणः, उन्निद्र एव संनद्धस्तस्थौ ।

## दशमो भागः

# दासीकृतं चोरनिबर्हणम्

**न पराक्रमसाध्यं यत्तदुपायेन सिध्यति ।**
**चोरा हता मारजन्या कथत्तैलनिषेकतः ॥ ३१ ॥**

१. अथ मारजनिर्भर्तुर्निदेशमनु तस्य स्नानीयवसनादि समाजहार । भृत्याय चाब्दपालाय तदर्पयामास । अपिच तेन पेयभाण्डमधिचुल्लि

निधापयामास । अथ पेयं पचन्त्यामेव तस्यां, दीपो ह्रसत्तैलो मन्दतामगात् । गृहेऽपि तैलं नासीत् । न वा वसावर्त्तयोऽप्यवशिष्टाः । ततः सा स्वगतमब्रवीत्—। अधुना किं विधेयम्? तैलाभावे कथं दीपज्वलनम्? तदभावे च कुतः प्रकाशः? अप्रकाशे च पेयं कथं संपादयितव्यम्? स्नाननिवृत्ताय च स्वामिने किमुपहर्तव्यम्?—इति ।

२. एवं मारजनिं चिन्ताकुलामालोक्य, अब्दपालः प्रोवाच—। अलं तैलाभावमधिकृत्य पर्याकुलत्वेन । तावदङ्गणं व्रज । तत्र चान्यतमाच्चर्मकुम्भात्तैलं किंचिदुद्धर । तन्मूल्यं हि नूनं प्रभातेऽस्मत्स्वामी वणिजे दास्यति—इति । अहो युक्तमुक्तं त्वया ! इत्युक्त्वा मारजनिस्तथा कर्तुं प्रवृत्ता । अथाब्दपालो गत्वा, अलिपर्वणः शयनभवनस्यानन्तरायामेव शालायां प्रसुप्तः । येन प्रत्यूषेऽवगाहार्थं प्रस्थितं गृहपतिमवगच्छेत् । तेन हि स्वामी स्नानार्थं गच्छन्वस्त्रहस्तेनानुगन्तव्यः । मारजनिरपि तैलमाहरन्ती, रिक्तं तैलपात्रमेकेन करेण, दीपं चासन्ननिर्वाणमपरेण वहन्ती, प्राङ्गणं प्राविशत् । यावच्च सा प्रथमं कुम्भमुपेयाय, तावदन्तःस्थितः स्तेनः स्वैरतरमप्राक्षीत् । अप्युपस्थितः स समयः? यत्ततो मन्दं भाषमाणस्यापि तत्तस्य वचनं सा स्फुटं जग्राह । यतश्चोराणां सुखश्वसनार्थं तत्स्वामिना कुम्भानां मुखपटा मात्रया शिथिलिता आसन् ।

३. सा तु कुम्भतस्तैलं लब्धुकामा, ततो मनुजशब्दमुत्थितं निशम्य, विस्मयस्तिमिता बभूव । एवंगतेऽन्यदास्योच्चैः क्रोष्टव्यम् । सा तु पटुमतित्वात्तस्मिन्समयेऽनुत्क्रोशमेव युक्तं मेने । तया हि शङ्कितम्—। कोलाहले कृते स्वामिनो मे सकुटुम्बस्य सहदासस्य च नाशोऽवश्यंभावी । अथ तं गूढपुरुषमुद्दिश्य तत्क्षणं मन्दं प्रतिजगाद—। न सद्य एव, किं त्वचिरेण । ततः

सा द्वितीयम्, ततस्तृतीयम्, ततोऽपि तुर्यम्, एवं क्रमेण सर्वानपि चर्मघटानाससाद। तदभ्यन्तराच्च यथापूर्वमेव प्रश्नं शुश्राव। स्वयमपि पूर्वोक्तमेवोत्तरं ददौ।

४. केवलमन्तिमात्कुम्भात्स प्रश्नो नोत्थितः। ततस्तमेव स्नेहं धारयन्तम्, अन्यांस्तु निःस्नेहान्पुरुषान्धारयतो विमृश्य, सोन्निनाय–। यथा–एते पुरुषाः प्रच्छन्नघातका भवेयुः। तैलवणिग्ब्रुवश्चैतेषामधिष्ठाता। किं च सर्वेऽप्येते मत्स्वामिनं हत्वा तस्य सर्वस्वमपहर्तुं वाञ्छन्ति–इति। तं पुनश्चोरसंकल्पं विफलीकर्तुं सा तत्क्षणमुपायमचिन्तयदयोजयच्च। तदा सा स्वगतं बभाषे—

**निकृत्या निकृतिप्रज्ञा हन्तव्या इति निश्चयः।**
**न हि नैकृतिकं हत्वा निकृत्या पापमाप्यते ॥ ३२ ॥**

५. सा करगतं भाण्डं तत्कुम्भतैलेन सत्वरं पूरयित्वा महानसं निवृत्ता। तत्र बृहन्तमेकं कटाहं चुल्ल्या उपरि निधाय, तं च तैलेनापूर्य, तस्याधो विपुलं दारुदहनं संदीपयामास।

६. यदा च तत्तैलं भृशं क्वथितं तदा सा त्रिचतुरा दासीः प्रबोध्य समागमय्य ताभिः कटाहं तं युक्त्या निभृतमङ्गणं प्रापयामास। ताश्च पुनःस्वापाय विससर्ज। अथ कटाहात्तस्मान्मनुजमारणपर्याप्तं क्वथदुष्णं तैलं प्रतिकुम्भं पातयामास। येन सर्वेऽपि ते गूढपुरुषा न मृतदग्धाः, किंतु दग्धमृता बभूवुः। यतस्तेषां कायैः प्रथमं दहनं पश्चान्मरणं प्राप्तम्। एवं तान्पुरुषान्व्यसून्विधाय सा रिक्तं तं कटाहं महानसं निनाय। द्वारं च संववार। तैलक्वथनार्थं निर्मितं महान्तमनलमपि सा तथा संचिक्षेप यथा स केवलं पेयं मन्दं क्वथद्धारयेत्। ततः सा संवेष्टुमिव यान्ती दीपमपि

निरवापयत्। एवं तयानुष्ठिते, निशीथोचितः शमः सर्वत्र प्रबभूव। अथात्मना सा महानसगतं वातायनमधितष्ठौ। येन स्वयमदृष्टा सती, सा तंतं भाविनमर्थं द्रष्टुं समर्था स्यात्।

७. अथ मुहूर्तेनैव स स्तेनपतिरुत्थाय, गवाक्षमपावृत्य, बहिरालोकयामास। तदा न कोऽपि मनुजश्चलति, न वा दीपो दीप्यते, नापि शब्दः श्रूयते—इत्येवं सर्वत्र व्यवगाहमानां शान्तिं प्रेक्षांचक्रे। मेने च—। सर्वथानुकूलोऽयं समयो मम द्विपोऽवस्कन्तुम्। अथ यथासंकेतं संज्ञादानार्थं कुम्भोपरि पाषाणखण्डान्प्राक्षिपत्। तांश्च कुम्भोपरि पततो द्रष्टुं तमसि नैशे नायं शशाक। तथापि तेषां प्रहारेण कुम्भतः शब्दानुत्थितान्शुश्राव। पुरुषं तु नैकमप्युत्थितं ददर्श। येन तन्मनो महतीं चिन्तामापेदे। तदनुचरा हि, अद्ययावन्नित्यं तदादेशाञ्श्रुतमात्राननन्वतिष्ठन्। अथासौ द्वितीयेन तृतीयेनापि पाषाणखण्डनिचयं चिक्षेप। यथापेक्षं फलं तु न किमपि लेभे।

८. अनेनासौ सत्यमेव बलवता साध्यसेनाक्रान्तः। स निभृतमङ्गणं प्रविश्य घटमेकमुपसृत्य मन्दमवादीत्—। किं सुप्तोऽसि? तदा कुम्भतः किमपि प्रतिवचनमनिशम्य, स शशङ्क—। यथालिपर्वणो हननस्य सर्वस्वापहरणस्य च कृते कृतो मे प्रबन्धः फलेन वञ्चितः—इति। अथ सर्वानपि चर्मकुम्भानेकैकश उपस्थाय, सर्वेऽप्येते मम सहचरा मृताः—इति स मेने। कथमेते मृताः स्युः—इति तु कुम्भेभ्यः सर्वतो धूमायमानस्य तैलस्य गन्धेन, अन्तिमे च तैलस्याल्पीभावेन, तस्मै व्याख्यातम्।

९. एवं तृतीयेऽप्यवसरे स्वप्रयोगं वन्ध्यतां गतम्, किं च विशेषतः सर्वानपि प्राणसमानात्मानुचरान्व्यापादितान्प्रेक्ष्य, स शोकविह्वलः सन्रोपो-

न्मत्त इव बभूव। किंतु, नातः परं मम क्षेमायात्र स्थातुम्। अहं हि परमार्थतो गृहीतः—इति विमृश्य, सोऽङ्गणप्राकारमारुरोह। झम्पां च दत्त्वा पलायांचक्रे।

१०. मारजनिस्तु स्वस्थानस्थितैव सर्वमेतत्तूष्णीं लक्षयामास। अथ सर्वं स्तिमिततां गतमालोक्य, साधु फलितो मम प्रयोगः—इति परितुष्टा सा चिन्तापगमविशदेन मनसा शय्यातलं शिश्रिये।

११. अथारुणोदयसमयेऽलिपर्वा गृहीतस्नानीयोपकरणेनाब्दपालेन सह स्नानागारं प्रस्थितः। स रात्रिवृत्तं किमपि न जज्ञौ। यतः, चोराणां प्रमथनात्पूर्वं तेषां बोधं परिहरन्त्या मारजन्या स शब्दाप्य न जागरितः। नापि पश्चात्, अप्रतिबोधाय तेषु सुप्तेषु। तया हि चिन्तितम्—। अधुना सर्वथा निवारिते व्यसने किं मम स्वामिना निन्दाभङ्गं प्रापितेन?

१२. अथ स्पष्टे प्रभाते स्नाननिवृत्तोऽलिपर्वा, तेन तैलवणिजा नाश्वतरा न वा तैलघटा यथोक्तं नीताः—इति वीक्ष्य परं विस्मयं गतः। गृहमप्रविश्यैव मारजनिं तत्र कारणं पप्रच्छ। सा प्रत्युवाच—। मां तावदनुयातुमर्हसि। जिज्ञासितं सर्वमर्थं त्वां ज्ञापयामि।

१३. एवं प्रार्थितोऽयमङ्गणमवतीर्णः। मारजन्या च बहिर्द्वारं पिधाय, प्रथमकुम्भं नीत्वासौ प्रार्थितः—। कियत्तैलमत्र वर्तते—इति पश्यतु स्वामी। तथा कुर्वन्स कुम्भे तैलस्थाने पुरुषं वीक्ष्य तत्क्षणं सचकितः स्थितः। तं मारजनिरब्रवीत्। अलं भयेन। एष नरो नूनं त्वद्वधकामः, किं तु प्रागेव न संप्रति। अधुना हि, न त्वां न वा कमप्यन्यं हन्तुं प्रभवेत्। असौ हि स्वयमेव हतो वर्तते।

१४. एतस्मिन्स पप्रच्छ–। हञ्जे, किमेतद्भणसि ? स्फुटं कथय। सा प्रत्युवाच–एषा कथयामि। किं तु प्रथमं प्रार्थनीयोऽसि मया–। यद्भवता निभृतं स्थातव्यम्। नाल्पोऽपि शब्दः कर्तव्यः। यतः, केनाप्यस्मत्प्रतिवेशिना वृत्तमेतन्न ज्ञातव्यम्। घटान्तरेषु तावत्पश्य। अलिपर्वा तथा चकार। प्रतिघटं च परेतपुरुषमीक्षांचक्रे। अन्तिमं च कुम्भमासाद्य तस्मिन्नल्पावशेषं तैलं ददर्श। सर्वमेतदालोक्य स स्वप्नगतमिवार्थं पश्यन्निश्चलः स्थितः। स प्रथमं कुम्भान्, ततश्च मारजनिम्, भूयोऽपि कुम्भान्–एवं तत इतश्चक्षुषा ददर्श, मुखेन तु न किंचिद्व्याजहार।

१५. अथ मनाग्मन्दीभूतविस्मयोऽसौ तां पप्रच्छ–। कुत्र गतः स तैलापणिकः ? किं वृत्तं तस्य ? सा प्रत्युवाच–। किं तैलापणिकं पृच्छसि ? स तावदापणिक एव नाभूत्। किं पुनस्तैलापणिकः ? को वासौ परमार्थतः, कुत्र वा गतः,–इत्येतदपि निवेदयिष्यामि। किं तु, उष्णोदकस्नानेन त्वया श्रान्तक्षुधितेन भाव्यम्। अतः, प्रथममभ्यन्तरं प्रविश्य त्वया क्वथिका पातव्या। उपाहारश्च कर्तव्यः। तं च सेवमानाय तुभ्यं यथावृत्तं सर्वमादितो विवरिष्यामि।

१६. अथ तौ गृहान्तरगतौ। स चोपाहारमजुषत। तथावस्थितं च तं मारजनिर्बहिर्द्वारवर्तिनो गैरिकचिह्नस्य दर्शनादारभ्य सर्वं व्याचष्ट। अब्रवीच्च–। गुहागतैरेव चत्वारिंशता लुण्ठकैरेतैः साहसिकैर्भाव्यम्। त्वं तद्रहस्याभिज्ञोऽसि–इति कथमपि तैरवगतम्। त्वद्वधार्थमेव च तेऽत्रागताः–इति दृढो मे तर्कः। तेषां सप्तत्रिंशन्मितास्त्वत्र मृतास्तिष्ठन्ति। तेषां नायकः, अन्यौ च द्वौ, संप्रत्यवशिष्टाः स्युः–इति।

१७. तया हि न ज्ञातम्, यच्चोरद्वयं वन्ध्योद्यमत्वात्पूर्वमेव नायकादेशा-

त्परलोकं प्रहितमासीत्—इति। सा भूयो बभाषे—। यावत्तु तेषामेकोऽप्यव-शिष्यते तावत्कुतस्ते क्षेमम्? उक्तं हि —

**ऋणशेषोऽग्निशेषश्च द्विषः शेषस्तथा रुजः।**
**पुनश्च वर्धते यस्मात्तस्माच्छेषं न धारयेत्॥ ३३॥**

अतस्त्वया नित्यमवहितेन स्थातव्यम्। मयापि सेवकधर्ममनुपालयन्त्या तव क्षेमहेतोः, सावधानं यथामति तत्तद्विधेयमेव।

१८. एतन्मारजन्योक्तं निशम्य, तस्याश्चातुर्येण बाढेन च धैर्येण प्रह्वीकृतोऽसौ तां मुहुः प्रशशंस। प्रोवाच च—। हे वीराङ्गने, त्रिवारं त्वया जीवितं मे रक्षितम्। अस्य प्रत्युपकारस्तु न मया कदापि कर्तुं शक्यते। संप्रति पुनरिदं वदामि—। यदस्मादेव क्षणात्प्रेष्यभावान्मुक्तासि। तत्रोपकारं निर्यातयितुमुचिततरं किं मयानुष्ठेयम्—एतदपि चिन्तयाम्येव। मन्ये—। मम जीवितं लुण्ठकानामेतेषां कपटप्रबन्धेभ्यो रक्षितुमीश्वरेणैव प्रेरितासि। अतोऽहमिच्छामि—। त्वया नित्यं मत्संनिधावेव स्थातव्यम्। येन, अतः परमपि येकेचन कूटप्रयोगा मच्छरीरमभिद्रोग्धुं द्रोहिणः कल्पयेयुः, तांस्त्वं वन्ध्यतां नीत्वा मां गोपायिष्यसि। उक्तं हि—

**पुनरावर्तमानानां भग्नानां जीवितत्यजाम्।**
**भेतव्यमरिशेषाणामेकायनगता हि ते॥ ३४॥**

संप्रति शवानामेतेषां निखननमेवावशिष्यते। किन्तु, अब्दपालस्य साहाय्येन मयैव तदनुष्ठेयम्।

१९. अलिपर्वण आरामः सुविस्तीर्ण आसीत्। प्रान्ते च घनवनराज्या छायाबहुलोऽपि। अस्यां वनराजौ, अब्दपालेन सहालिपर्वा सर्वशवशयन-

पर्याप्तावकाशां दीर्घविस्तृतां गर्तामुच्चखान । तत्रत्याया मृत्तिकायाः शिथिलत्वात्, तत्कार्यमचिरेणैव संपन्नम् । अथ ताभ्यां तस्मिन्भूरन्ध्रे ताञ्शवानन्योन्यसंसक्तपार्श्वान्निधाय, मृदा चाच्छाद्य, गर्तोपरितलं समीकृतम् । ततश्च ते कुम्भाश्चोरायुधानि च ताभ्यां निगूढानि । अश्वतराश्चान्तरान्तरा दासैरापणं प्रापय्य विक्रापिताः । यतस्तैरलिपर्वणः प्रयोजनं नासीत् ।

## एकादशो भागः

## छद्मापणिकः

**असभ्याः सभ्यसंकाशा निस्त्रिंशा मृदुमानसाः ।**
**जिघांसवो हितपरा दृश्यन्ते कार्यतः शठाः ॥ ३५ ॥**

१. अनेन समयेन चोराग्रणीर्वनगतां गुहां प्रतिनिवृत्तः । सा तु दृढानुरागाणां प्रेयसां वीरानुचराणां विनाशेन तस्य शून्या दुर्दर्शना च बभौ । येन तीव्रतरः शोकानलस्तन्मनसि संदुधुक्षे । सोऽचिन्तयत्—। एते मदनुजाः शस्त्रपाणयो युध्यमाना अहनिष्यन्त चेत्, एष शोकदहनो न मामधक्ष्यत् । एते पुनः पाशगृहीता विवशा इव पशवो निर्घृणं प्राणैर्वियोजिताः । एतच्चिन्त्यमानं सत्, समूलमिवोन्मूलयति मामकं मनः—इति । ततोऽसौ प्रत्यपकारविमुखस्य केवलं कृते प्रतिकुर्वाणस्याप्यलिपर्वणो वयस्यवधकृते प्रत्यपकर्तुं कृतमतिर्बभूव ।

२. कथं मया सिद्धकामेन भाव्यम् ?—इति चिरं निपुणं विमृश्य स उपायमेकं मनसाकल्पयत् । ततश्च गुहागतं शयनमधिशय्य क्षणेन गाढं निदद्रौ ।

३. अथ प्रातरुत्थाय, स प्रवसतो वणिजो वेषं विदधौ। नगरं च गत्वा भोजनागारे वासमग्रहीत्। तेन संभावितम्—। यदनेन समयेन, अलिपर्वणो गृहगतं वृत्तविशेषं नगरे बहुलीभूतम्, जनानां च संलापविषयीभूतं स्यात्—इति। अतः, तच्छ्रोतुकामोऽयमन्नशालास्वामिनं नगरगतामचिरजातां कौतुकवतीं कांचिद्वार्त्तामपृच्छत्। स तु पृष्टो बहूनि वृत्तानि कथयामास। चोरहिंसां पुनरुद्दिश्य न किंचिदपि। ततः सोऽनुममे—। यदलिपर्वणा स चोरवधव्यतिकरो रहस्यमिति रक्षितः, मा तद्वृत्तस्य श्रवणेन जनानां जिज्ञासा जायताम्। मा च गुहागतां धनसंपदं तदधिगमोपायं चोद्दिश्यैते कामपि चर्चां कुर्वताम्—इति।

४. स स्तेनपतिरात्मानं दुकूलवणिजं जनेभ्यः कथयामास। उवाच च—। पट्टवासांसि विक्रेतुं कयाचित्समीचीनया पण्यशालया मम कार्यमस्ति—इति। कंचित्कालमन्विष्य स पण्यागारमेकं परिचिक्रिये। तत्तु विधिवशात्कश्यपस्य भूतपूर्वाया विक्रयशालायाः पुर एव वर्तते स्म।

५. अथायं कपटापणिको वनं निवृत्तः। गुहां च प्रविश्य, तत्र संचितानि महार्घाणि चीनांशुकानि स्वीयमश्वमारोपयामास। तानि च नगरगतं निजं पण्यस्थानमानिनाय। एवं नैकवारं विधाय, स बहून् दुकूलभारान्नवां पण्यशालामवहत्। तदर्थं पुनः, स्वगुहां लोकलोचनेभ्यो रक्षन्, नक्तमेव निभृतं गतागतानि चकार।

६. स नाम्ना कुजहर्षणो बभूव। आगन्तुकश्च सन्, स प्रतिवेशिवणिक्षु भूयसा दक्षिणोदारत्वेन ववृते। तस्य संमुखे पण्यागारे स्थितोऽलिपर्वणः पुत्रः, न केवलं युवा दर्शनीयश्च, पटुबुद्धिरप्यासीत्। स च कुजहर्षणश्च, वारंवारमुद्यमगतान्विषयानुद्दिश्य संलापं चक्रतुः। येन तौ गच्छता कालेन मिथो वयस्यभावमिव पुपुषतुः।

७. अथ कदाचिदलिपर्वा पुत्रस्य पण्यशालायाः समीपेन गच्छंस्तां प्रविष्टः। पुत्रेण सह संभाषणेन स्थितश्च। एवं हि तन्मार्गेण व्रजन्स भूयो विदधौ। स लुण्टाकपतिरलिपर्वाणं दृष्टमात्रमभिजज्ञौ। गते तु तस्मिन्सोऽनभिज्ञ इव तस्य पुत्रमप्राक्षीत्–। कोऽयं पुरुषः ?–इति।

८. यूनस्तस्य मुखात्तं तस्य जनकं विज्ञाय, स स्तेनधुरीणो भूयसा जहर्ष। चिन्तितं हि तेन–। यदेषोऽनयोः संबन्धः, चिकीर्षिते मम कर्मणि भृशमुपकुर्यात्–इति। ततः प्रभृति सोऽलिपर्वपुत्रेण सह सौहार्दं सविशेषं संवर्धयामास। तस्मै च नैकवारमुपायनानि ददौ। एवं तस्मिन्दृढसुहृदिव व्यवहरति स्म।

९. स वणिग्पुत्रा नैतद्रोचयामास, यदेतान्यागन्तुकवणिज उपकृतानि मया प्रतिग्राह्याणि, तत्प्रत्युपकारः पुनर्न कोऽपि कर्तव्यः–इति। किन्तु तस्य गृहस्य स्वल्पावकाशत्वाद्यथामनीषितं तस्यातिथ्यं कर्तुं स न प्रबभूव। तथाहि, सोऽलिपर्वणो भूतपूर्वं गृहमध्युवास। तत्पिता तु धनीयसो ज्यायसो भ्रातुः। अतः, स विषयं तमुद्दिश्य कदाचित्पितरं बभाषे।

१०. अलिपर्वा तु तनयवयस्यान्संभावयितुं न कदापि मन्दादरो बभूव। अतः स कदाचिन्मन्दवासरे स्वगृहमागतं तनयं बभाषे–। श्वो रविवासरो वर्तते। रविवासरे च त्वया च कुजहर्षणेनापि श्रेष्ठिवरसंप्रदायमनुसृत्य पण्यशाला नैवोद्घाटनीया। अतः श्वः, तमुद्यमिनमात्मना सार्धं विहर्तुं नेष्यसि। निवर्तमानश्च वर्त्मनैतेन गच्छन्, तं मम गृहमानेष्यसि। विधिवदामन्त्रणापेक्षया यदृच्छया किल तस्य गृहानयनं सुतरां समीचीनं मे भाति। अहमपि संपन्नतरं भोजनं कल्पयितुं मारजनिमादेक्ष्यामि।

११. अथापरेद्युः, अलिपर्वसूनुर्हर्षेणमुपस्थितः। विहारार्थं च तावुभौ प्रस्थितौ। निवर्तनसमये स व्यवसायी युवा हर्षणं पितृगृहस्य पुरोयायिना वर्त्मनानयत्। तद्गृहं प्राप्य प्रविष्टोऽयमभ्यागतमब्रवीत्—। प्रियवयस्य, भवनस्यास्य पिता मे पतिर्वर्तते। तमहमावयोः सौहार्दमधिकृत्य भूयो व्याहार्षम्। तेन च त्वत्परिचयसौभाग्यमनुभवितुं नैकवारं मनोरथोऽपि दर्शितः। अतस्तद्गृहसविधेन गच्छन्तं त्वां, न चेदहं तस्मै नेष्यामि, ध्रुवं स मह्यं कोपिष्यति।

१२. अलिपर्वगेहे प्रवेशः, तेन क्षौमनैगमेन चिरवाञ्छित एवासीत्। तथाहि, एवं प्रकाशलब्धेन प्रवेशेन, स न केवलं सुखेन किं तु विनैवात्मसंदेहेन तं व्यापादयितुं पारयेत्। एवं चेतसा प्रवेशोत्सुकोऽपि, स प्रकाशमब्रवीत्—। सखे, अलं निर्बन्धेन। अनुजानीहि मां गृहगमनाय—इति। अस्मिन्नेवान्तरे, अन्तर्गेहद्वारं सेवकेनापावृतम्। तेन च, अलिपर्वतनयो वयस्यमगणितप्रत्यादेशं पाणिना पाणौ गृहीत्वा मित्रभावेनान्तश्चकर्ष।

१३. ततोऽलिपर्वा तस्मै मायाव्यवहारिणे गरीयसा दाक्षिण्येन स्वागतं व्याजहार। बभाषे च—। एष मे पुत्रः, त्वां च तावकानि च बहून्युपकृतानि श्लाघमानः, मया बहुशः श्रुतः। ततोऽहमप्याशंसे—। गच्छता कालेन दृढतां गतेनावयोः परिचयेन, त्वत्सखिषु गण्यतामासाद्य धन्यमात्मानं कलयेयम्—इति। एतस्मिन्कुजः प्रतिजगाद—। मामैवम्। मदीयं खल्विदं भाग्यम्, यत्त्वत्पुत्रपरिचयो मयाधिगतः। तथा हि, एतद्दाक्षिण्यम्, इयं चातुरी, अदश्च मतिपाटवं, विरलं खलु यूनि लभ्यन्ते।

१४. अथ कांचित्कालकलां संभाषणेन नीत्वा, स वणिक्प्रस्थातुं

किलोत्तस्थौ । तमलिपर्वा पृच्छति स्म–। आर्य, एवं कृतत्वरं कुत्र गच्छसि ? त्वया त्वसकृदुपकृतमस्य मे तनयस्य । अधुना च, मया सह सकृद्भुक्त्वा मामप्युपकर्तुं प्रसीद । संभवेत्किल यन्मदीयमातिथ्यं भवादृशस्यानर्हम् । तथापि, तदौदार्येण स्वीकुर्वता भवतानुग्राह्यमात्मानमिच्छामि । हर्षणेन प्रतिभाषितम्–। आर्य, एतां तवाभ्यर्थनां गरीयांसमनुग्रहं गणयामि । तथापि, कारणेनैव त्वत्प्रणयग्रहणाक्षममात्मानं समर्थये । कथितं चेत्, कारणमिदं त्वमपि पर्याप्तं मंस्यसे ।

१५. ततोऽलिपर्वणा भणितम्–। भद्र, न चेद्रहस्यम्, कारणमेतत्कथयित्वा जनोऽयं त्वयानुग्रहीतव्यः । पण्याजीवेन प्रत्युक्तम्–। अलवणः स्वल्वाहारः पथ्याशिना मया क्रियते । निर्लवणानि च भक्ष्याणि प्रायो दुर्लभानि । अतस्तन्निर्माणार्थं क्लेशं ते परिहरता मया न शक्यते प्रार्थितमिदमभ्युपगन्तुम् ।

१६. अलिपर्वावोचत्–। अकिंचित्करमेतत्कारणम् । त्वया च तदर्थं प्रणयो मे न प्रत्याख्येयः । प्रथमं तावत्, मद्गृहे निर्लवणमेव पच्यन्तेऽपूपाः । अपरं च–। यन्मांसाद्यानीयेत, तन मा लवणं मिश्रीकुरु--इति सद्य एव गत्वा सूदमादिशामि । एषोऽहं गतस्तथानुष्ठातुम्–इति ।

१७. एतद्भाषमाण एवालिपर्वा महानसं प्रविश्य मारजनिमाज्ञापयामास–। यदद्य त्वया भोजनसमये मांसं निर्लवणमेव परिवेष्टव्यम् । अभ्यागतो हि निवृत्तलवणोऽस्ति ।

## द्वादशो भागः

# चोरनायकनिधनम्

भीतवत्संविधातव्यं यावद्भयमनागतम् ।
आगतं तु भयं प्रेक्ष्य प्रहर्तव्यमभीतवत् ॥ ३६ ॥

१. मारजनिर्गृहपतेरादेशाञ्श्रुतमात्रानेव नित्यं सानन्दमन्वतिष्ठत्। अद्य पुनः स्वामिसंदेशमाकर्ण्य सा मनाग्व्यमनायत । तेन समयेन हि भोज्यजातं कल्पितप्रायमासीत् । अतः, तेन संदेशेन कानिचिद्भोज्यानि तया भूयः संपादयितव्यानि । ततः सा तं प्रतिबभाषे—। अहो विचित्र एष पुरुषः, यः पिशितं विनैव सैन्धवं सेवते ! को नामायं भवेत्? तदर्थं भोज्यानि द्वितीयवारं पचन्त्यां मयि, युष्माकं भोजनमतिचिरस्थापितत्वात्, शीतं च रुच्येतरच्च जायेत—इति । अलिपर्वा प्रत्युवाच—। अयि मारजने, अलमपरितोषेण । स खलु शुचिव्रत आर्यजनोऽस्ति । अस्मिन्समये त्वया मदुक्तमनुष्ठातव्यमेव ।

२. एवमाज्ञप्तेयमकामतोऽपि स्वाम्यादेशं निरवर्तयत्। कोऽयं लवणद्वेषी स्यात्? अहमेनं पश्याम्येव—इति सा स्वगतं बभाषे । तया हि निर्लवणाशी पुरुषो न दृष्टपूर्वः, न वा श्रुतपूर्वोऽपि। अतः समाप्ते महानसव्यापारे, भोजनपीठेषु चाब्दपालेन निहितेषु, भोजनपात्राण्युपरितनीं भूमिं नयतस्तस्य सा साहाय्यमकरोत्। एवं व्यापृता सा तं कुजहर्षणं निपुणं सावकाशं च निरूपयितुमलमासीत्।

३. दृष्टमात्रं तं कृतवेषान्तरमपि सा चोरनायक इत्यभिजज्ञौ । निपुणतरं च विलोक्य, तेनान्तःप्रावारं गूढधृतां कृपाणीमपि लक्षयांचकार। तदा

सा स्वगतं बभाषे–। अत्र नास्त्यणीयानपि विस्मयस्यावकाशः, यदमुना दुरात्मना मत्स्वामिनो मन्दिरे लवणं न भोक्तव्यम्। यस्य हि लवणं भुज्यते तत्प्राणग्रहणमतीवाधर्म्यम्। उक्तं हि–

**भुज्यते यस्य लवणं तद्धिंसा गुरु पातकम्।**

इदमेव वचनं स्मृत्वा मत्स्वामिवधकामेनानेन लवणभक्षणं वर्ज्यते। अहं पुनरेनं ध्वस्तमनोरथं विधास्ये।

४. अथ मारजनिर्भोजनशालां प्रति भोज्यजातवहनेऽप्यब्दपालस्य साहायकमनुतष्ठौ। तत्स्वामी प्राघूर्णकेन सह यावद्भुञ्जानः स्थितः, तावत्सा स्वामिनं चोराततायिनस्तस्माद्रक्षितुं कमपि निपुणमुपायं सर्वात्मना चिन्तयति स्म। अथ भोजनादूर्ध्वं सा गृहपतेरभ्यागतस्य च पुरः कानिचित्फलानि मद्यविशेषांश्च स्थापयामास। ततोऽब्दपालेन सह भोक्तुं किल पाकागारं प्राविशत्।

५. तदा कुजहर्षणः स्वगतमवादीत्–। अयं प्राप्तः स चिरकाङ्क्षितः समयः। अहमिमं पितरमेतं च तत्पुत्रं, उभावपि मद्यं प्रकामं पाययित्वा विचेतनौ विधास्यामि। तथाविधं च जरठमिमं लीलया परलोकं विसर्जयिष्यामि। एवं कुर्वन्तं दस्युचक्रवर्तिनं मां निवारयितुं का शक्तिरमुष्य क्षीरकण्ठस्य बालस्य? ततश्च परिवेष्टरि दासे पाचिकायां च दास्यां महानसे भोजनव्यग्रयोः सुप्तयोर्वा सतोः, मया यथापूर्वं पलायनेनात्मा रक्षितुं शक्यः।

६. किं तु, एतत्तस्य चिकीर्षितं मारजन्या तर्कितपूर्वमेव। अतस्तस्य निर्वहणं व्याहन्तुं सोद्यता बभूव।

नाधर्मो विद्यते कश्चिच्छत्रून्हत्वाततायिनः ।

—इति व्यासवचनं स्मरन्ती सा भोजनाय महानसमगत्वा, स्वयं नृत्याङ्गनावेशं निपुणमधारयत् । मुखमपि च्छद्ममुखेनाच्छादयत् । मध्य-भागं च रजतरशनया पर्यवृणोत् । तत्र च मणिमण्डितमुष्टिं कृपाणिकामासजत् । एवमात्मना संनद्धा सा, अब्दपालमादिशत्—। एहि, मृदङ्गमादत्स्व । आवां यथा भूय एकाकिनमेव स्वामिनं तथाद्य सतनयातिथिं तं नृत्तगीताभ्यां विनोदयिष्यावः ।

७. एवमाज्ञप्तोऽब्दपालः, मारजन्यानुगतः, मृदङ्गमादाय तद्वादनपरो महानसान्निश्चक्राम । विश्रामागारं च प्राप । तत्र च द्वारदेशे स्वामिनः प्रवेशानुज्ञां प्रतिपालयन्स्थितः ।

८. अथालिपर्वोवाच—। प्रविश रे मार्दङ्गिक । हे मारजने, दर्शय निजकौशलमतिथयेऽस्मै । येन स कौशलं ते परीक्षेत—इति । ततो मायाव-णिजमुद्दिश्य तेन भणितम्—। अस्य विनोदस्य कृते न कोऽपि धनव्ययो मया कृतः । एषोऽस्मद्गृहदासैरेव सर्वथा संविहितः । अत्र पात्रे अब्दपालो मारजनिश्च । प्रथमो मे परिवेषकः, द्वितीया च पाकशालाध्यक्षा । मन्ये—। एतौ तव रञ्जनाय क्रमेयाताम् ।

९. तदा तत्संगीतकमतर्कितोपस्थितं प्रेक्ष्य हर्षणश्चिन्तामाविशत्—। कथमधुना निर्वहाम्यात्मसंकल्पम् ? अथवा, कृतं चिन्तया । अद्यायं प्रयोगो मया नानुष्ठितश्चेत्, न तावता गरीयसीं क्षतिं कलयामि । यतोऽहमलिप-र्वपुत्रेण सार्धं समृद्धतरसौहार्दो भविष्यामि । ततश्च भविष्यति कदापि मया सिद्धप्रयोगेण भाव्यमेव । अतः किमनेन संगीतेनान्तरायेण ? प्रवर्ततां

नामेदम्—इति । अथ प्रकाशमाह—। महानयं मयि तवानुग्रहः, यदित्थमभ्यागतं मामाराधयितुं प्रयतसे । अतो मयापि च्छन्दस्ते न व्याहन्तव्यः ।

१०. अतिथिना सार्धं प्रवर्तमानं स्वामिनो भाषणं समाप्तं प्रेक्ष्य, अब्दपालो मृदङ्गं वादयितुं गातुं च प्रवृत्तः । कलाकुशला च मारजनिर्नर्तनपरा, गानसमकालं पादन्यासं कुर्वती, स्वामिनं स्वामिसूनुं च भृशमावर्जयामास । कुजहर्षणः पुनः वैरसाधनमुद्दिश्य प्रबन्धकल्पनेन व्याक्षिप्तचेतास्तस्यां नात्यादृतो दृष्टः ।

११. अथ कंचित्कालं नर्तित्वा मारजनिः, रशनागतां कृपाणीमाचकर्ष । तया च कदाचित्स्वामिनः, कदाचिच्चाभ्यागतस्य वक्षो लक्षयांचकार । भूयश्च स्वकीयमप्युरः, तेन भेत्तुमिवोद्यतमात्मानमदीदृशत् ।

१२. एवं कंचित्समयं नीत्वा सा, अब्दपालस्य हस्तान्मृदङ्गमाच्छिनत् । अथ तं वामेन पाणिना कृपाणिकां च दक्षिणेन धारयन्ती सा, अलिपर्वणः पारितोषिकं किल प्रार्थयितुं चक्राम ।

१३. तदा परिवृत्ततले तस्मिंश्चर्मवादित्रे, अलिपर्वणा हिरण्यदीनारः पातितः । तत्तनयेनापि तथैवाचरितम् । तदालोक्य कुजहर्षणोऽपि तामात्मनः पुर आयान्तीं प्रेक्ष्य, निजोरसि पटान्तर्गतां धनभस्त्रिकामाक्रष्टुं प्रवृत्तः । येन तस्यै प्रीतिदानं दद्यात् । यावच्चासौ वामेन हस्तेन भस्त्रिकां धृत्वा दीनारनिष्कासनार्थं हस्तमपसव्यं तत्र प्रवेशयति, तावदेवेत्थं व्यापृतोभयहस्तं तं मारजनिश्छुरिकाप्रहारेण भिन्नहृदयं चकार ।

१४. एतदालोक्य पितापुत्रावुभावपि भयविस्मयाक्रान्तौ प्रोच्चैश्चुक्रुशतुः । पिताब्रवीत्—। दुर्भगे, किमिदं त्वयानुष्ठितम्? अतिथिमेनं घातयन्त्या त्वया, अहमपि सान्वयो घातितः ।

१५. सा प्रत्याह–। मा तावद्। मया हि न तव नाशः, किं तु तव च त्वत्कुटुम्बस्य च रक्षणमेव विहितम्। अथ तया कुजहर्षणस्य प्रावारमपसार्य तदन्तर्गुप्तो मण्डलाग्रः स्वामिने दर्शितः। भणितं च–। पश्य, नायं सुहृद्, किंतु दुर्हृदेव, यस्त्वया भोजितः। वदनमस्य निपुणं निभालय। येन त्वमेनं तैलवणिजमभिज्ञास्यसि। अयमेव दस्युनायकः। भूयश्चावधारय–। यथा–त्वद्गेहेऽनेन लवणभक्षणं यत्नतो वर्जितम्। किमत्र कारणं स्यात्? किमन्यत्? इदमेव यल्लवणं चेत्त्वदीयभवने तेन खादितम्, न त्वं तेन हन्तुं युज्येथाः–इति। यदैव त्वया लवणनिवृत्त एषोऽभ्यागतो मम कथितः, तदाप्रभृत्येव तमनु जातशङ्केवाभूवम्। उक्तं हि भगवता व्यासेन–

**अशिष्टाः शिष्टसंकाशाः शिष्टाश्चाशिष्टदर्शनाः।**
**दृश्यन्ते विविधा भावास्तेषु युक्तं परीक्षणम् ॥ ३७ ॥**

किं च तद्वदनदर्शनेन तु तत्क्षणं तमभिज्ञाय मया तर्कितम्–। यदेष तवाशुभं ध्यायति–इति। तथा चोक्तम्—

**आकारश्छाद्यमानोऽपि न शक्यो विनिगूहितुम्।**
**बलाद्धि विवृणोत्येव भावमन्तर्गतं नृणाम् ॥ ३८ ॥**

एवं त्वद्वधार्थिनमेनं व्यापादयन्त्या मया युक्तमेवाचरितम्–इति त्वमपि ज्ञास्यसि। तथा चेयं व्यासभणितिः—

**यस्मिन्यथा वर्तते यो मनुष्यस्तस्मिंस्तथा वर्तितव्यं स धर्मः।**
**मायाचारी मायया वर्तितव्यः साध्वाचारः साधुना प्रत्युपेयः ॥३९॥**

१६. अथालिपर्वा चिन्तयामास–। इदानीमपि पूर्ववदहं मारजन्यैव चातुर्येण दाक्ष्येण धैर्येण च मृत्युमुखान्मोचितः। अतो दासीभावान्मोचितपूर्वामेनां स्नुषापदमपि किं न लम्भयेयम्? उक्तं हि–

**विषादप्यमृतं ग्राह्यममेध्यादपि काञ्चनम् ।**
**नीचादप्युत्तमां विद्यां स्त्रीरत्नं दुष्कुलादपि ॥ ४० ॥**

तां चावादीत् । वत्से मारजने, नूनं त्वया बहूपकृतं मम । नातिचिरात्प्राक् प्रेष्यभावान्मोचयता मया भणितैव त्वम्—। यथान्यदपि पारितोषिकं मत्तः प्राप्स्यसि—इति । अयं च संप्राप्तः समयस्तद्वितरीतुम् । अद्य त्वां मत्स्नुषापदमारोपयितुमिच्छामि ।

१७. अथासौ पुत्रस्य संमूखीभूय बभाण—। अद्ययावत्त्वं मदाज्ञापरोऽभूः । येनाधुनापि त्वं मद्वचनमाश्रुत्य जन्मदासीमपि मारजनिमेतां भार्यात्वेनाभिनन्देः । इदं तु प्रमाणनिरपेक्षमेव यत्कूटवणिजा हर्षणेन, मद्वधमेव संकल्पयता त्वं वयस्यभावं लम्भितः । एतदप्यभूमिः संशयस्य—यन्मां प्राणैर्वियोज्य स त्वामप्यद्य निशायां प्राणैर्व्ययोजयिष्यत् । एवमेतत्प्राप्नोति यन्मारजन्या न केवलं मदीयं, किं तु त्वदीयमपि जीवितं परिरक्षितम् । अतः, चतुरोपकारिणीमिमां भुजिष्यां त्वद्वधूत्वं नारोपयामि चेत्, युक्तानुष्ठानात्सर्वथा वाच्यमात्मानं विदध्याम् । उक्तं हि—

**कनकभूषणसंग्रहणोचितो यदि मणिस्त्रपुणि प्रणिधीयते ।**
**न स विरौति न चापि न शोभते भवति योजयितुर्वचनीयता॥४१॥**

१८. पितृवचसोऽस्मात्पूर्वमेव, अलिपर्वपुत्रो मारजन्याश्चातुर्येण हृतप्रीतमना आसीत् । तथा चोक्तं भारविणा—

**कमिवेशते वशयितुं न गुणाः ?**

किं तु श्रीमतः श्रेष्ठिनः संभूतत्वान्, जन्मतोऽनुगतदासीभावां तां कामयितुं नोदसहत । अधुना तु दासीभावे निवृत्ते, अन्यैव वनितासौ संपन्ना । किं च—

**यत्रैव मनसः कामस्तत्रैव पितृचोदना ।**

इति मत्वायं तत्क्षणं सानन्दं तदाज्ञाविधानोद्यतमात्मानं निवेदयामास ।

१९. अथ तौ पितापुत्रौ, निखातपूर्वाणां चोरशवानां सविध एव, अन्तर्गर्ते तदग्रणीशरीरं शाययामासतुः । किंच तमर्थं तथा निभृतं निर्वर्तयामासतुः, यथा नैकोऽपि प्रातिवेशिको लेशतोऽपि तदभिज्ञो बभूव । अथान्यस्मिन्दिवसे, तथानन्तरेषु च केषुचित्कुजहर्षणं पण्यशालामपावरितुमनागतं प्रेक्ष्य, जनाः 'कुत इदम्?' इति व्यस्मयन्त । किन्तु गच्छता कालेन तद्गतं सर्वमपि तैर्विस्मृतम् ।

२०. ततः कतिपयदिवसापगमे, मारजन्यालिपर्वणयोर्विवाहो निर्वृत्तः । तन्निमित्तं चालिपर्वणा सुसंपन्नं भोजनं ज्ञातिभ्यो दत्तम् । तथा चोक्तम्—

**संभोजनं संकथनं संप्रश्नोऽथ समागमः ।**
**एतानि ज्ञातिकार्याणि न विरोधः कदाचन ॥ ४२ ॥**

तदा सर्वैरपि भणितम्—। अहो उचितमाचरितमलिपर्वणा, यज्जन्मदास्यपि मेधाविनी शीलवती मारजनिर्दास्यादुद्धृत्य स्नुषात्वमारोपिता ! यतः संबन्धस्यास्य परमार्थहेतुस्तेषामज्ञात एवासीत् ।

२१. अथ वर्षं यावदलिपर्वा चोरगुहां नैवागमत् । दीर्घेऽस्मिन्नन्तरे कामपि चोरबाधामनुपस्थितां प्रेक्ष्य भूयोऽप्यसौ वाजिना तद्गुहां प्रापत् । गुहाया निकटेऽश्वादवतीर्य तत्र नराणां तुरगाणां वा पदमुद्रा अनालोक्य, स वीतभयमात्मानं मेने । अन्तः प्रविष्टश्च स उन्निनाय—। यदा कौशेयभाराश्चोराग्रण्या विक्रयार्थं पुरं नीताः, तदाप्रभृति न कोऽपि नरो गुहान्तः प्रविष्टः—इति ।

२२. अथासौ पुनरप्यात्मगतं जगाद—। सर्वेऽपि चोरा ध्रुवं लयं गताः। गुहाप्रवेशरहस्यं च मद्वर्जे न कोऽप्यन्यो जानाति । येन समग्रस्यैतावतः कोशस्य, अहमेवासाधारणः स्वामी । एनमहं यथाकामं भोक्तुमीशे । ततः, तेनात्मना सार्धमानीतो महान्स्यूतः स्वर्णमुद्राभिर्निरन्तरं पूरितः । प्रच्छन्नं च पुरं प्रत्यानीतः ।

२३. केनचित्कालेनालिपर्वणा स्वतनुजस्तामटवीं नीत्वा गुहारहस्यं ज्ञापितः । स तनयोऽपि विपुलां तां संपदं चातुर्येणोपयुञ्जानो भुञ्जानश्च गच्छता कालेन नगराध्यक्षपदं प्राप्तः । सोऽपि पितरमनुकुर्वंस्तद्रहस्यं स्वीयं पुत्रमुक्तवान्, सोऽपि स्वीयम् । अनया परंपरया तद्गुहारहस्यं बहूलानि वर्षाणि यावदलिपर्ववंशजा जज्ञुः । तद्गुहागतानि सर्वाणि महार्घाणि वस्तूनि शनैःशनैरात्मसाच्चक्रुः । एवं क्रमेण गुहान्तर्वर्ती स धनसंचयः प्रचुरोप्यस्तमितो बभूव । तेनैव समं तद्रहस्यगोपनप्रयोजनमपि । यतः खल्वहं कथामिमामामूलादलिपर्ववंशजाद्विदितुं युष्मभ्यं च निवेदयितुं प्राभूवम् ।

२४. अथ, अतिप्रभूतोऽपि चोरसंचितो धनराशिः कालेन क्षीणतां गतः—इत्यालोच्य स्मरामि भगवतो व्यासस्य वचनम्—

**सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।**
**संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् ॥ ४३ ॥**

इति समाप्तेयं चोरचत्वारिंशी नाम कथा ।

# NOTES.

—:o:—

**Chapter I. Paragraph** 1. सर्वं तरति कोशवान्—a rich man can surmount any difficulty. 2. दृश्यतां इ.—to be seen. 3. एभिः दस्युभिः भाव्यं—these must be bandits. 5. प्रकाशतां इ.—to be lit up. 12. भयाय न संवृत्तं—caused no fear. **II.** 4. वृक्षच्छेदनेन प्रयोजनं न स्यात्—there would be no need of cutting trees. मनोरथैः संपत्तव्यम्—the desires shall be realised. 7. धनेन मानतो ज्ञातेन किं ?—what is the good of knowing the amount of money ? मम अर्थः संपद्येत—my purpose will be served. त्वं कालप्रतीक्षां कारिता—you were made to wait. **III.** कोटिद्वयोपेतं धनुः लक्षाय प्रणतं—furnished with the two ends, the bow bent for hitting the mark; the other implied sense being—possessed of two crores of Rupees, the bow bent to aim at (securing) a lac (more) 1. अनुगृहीतास्मि भवत्या मान ददत्या—I thank you for your lending me the measure. 8. जातस्याजननं नास्ति—there is no undoing what has been done. **IV.** 3. चिरं अस्थास्यत्—would have long stopped there. 5. मन्त्रः अस्य न उपस्थितः—the spell did not occur to him. 8. समुचितं स्थानमिति कृत्वा—taking it for the right place. 11. द्विधा कल्पनीयः—should be cut in two. **V.** 3. एतद् देवरोक्तम्........जातं—the moment they were heard, the words of her brother-in-law dispelled her doubts and comforted her. **VI.** 4. तस्य सुप्रातं आशशंसे—wished him Good-morning. तस्य संतोषः न अहीयत—contentment never left him.

10. प्रीतये संवृत्तं—gave delight. मा अस्तं गमः=मा अस्तम् ( अ- ) गमः=मा अस्तं गच्छ. The stanza means—Do not become a non-entity among the people, but gain celebrity by your deeds. Remain not at the lowest, neither low, nor even in the middle; but remain top-most widely known. **VII.** 2. प्राणान् अपि...रक्षितव्यं—a man should preserve from loss, his money even by endangering his life. प्रत्यर्पयितुं किल उद्यतः—prepared as it were to give back. न अर्थं ते संपादयितुं मया पार्यते—it is beyond my power to do your business. 12. पारितोषिकं लम्भनीयः—should be given the reward. 13. तं हातुं न उदसहत—could not lose it. 16. बहु उपकृतं त्वया मे—I thank you much. **VIII.** 4. शंकाविषयतां न आपन्नाः—were not suspected. **IX.** 10. इह वसन्तं मां सोढुं अर्हसि—please allow me to stay here. 12. त्वया प्रविश्य गृहमिदं सनाथीकरणीयं—do me the favour of entering the house. पेयं पक्त्वा धारय--keep ready the cooked drink. **X.** 2. अन्यदास्या उच्चैः क्रोष्टव्यं—another maid would have cried aloud. 6. पेयं मन्दं क्वथत् धारयेत्--would keep the broth simmering. 8. प्रबन्धः फलेन वञ्चितः—the plot proved fruitless. 9. परमार्थतो गृहीतः—was truly known. 11. तेषां बोधं परिहरन्ती—lest she should rouse them. अप्रतिबोधाय तेषु सुप्तेषु—when they went to sleep never to wake again. 17. शेषं न धारयेत्—should not suffer the remainder to remain. त्वया अवहितेन स्थातव्यं—you should be on your guard. **XI.** कार्यतः हितपराः दृश्यन्ते—appear friendly when it suits their purpose. 4. पण्यशालया मम कार्यं—I am in need of a shop. 6. मिथः वयस्यभावमिव पुपुषतुः—behaved somewhat friendly towards each other. 7. संभाषणेन अवस्थिताः—stayed talking.

14. प्रस्थातुं किल उत्तस्थौ—rose as if to depart. **XII.** 8. रञ्जनाय क्रमेयातां—would serve to amuse. 15. नचापि न शोभते—does not fail to shine. यस्मिन् यथा etc....साधुना—with goodness. The stanza means—It is a duty of a man to behave towards another as he does towards himself. A dishonest person should be dealt with cunningly and an honest person should be dealt with fairly.

## Glossary of difficult words.

——: o :——

अकाण्डमरणं—sudden death.

अकालहीनं—without loss of time.

अगदभिषज् *m.*—a physician.

अङ्गारकारकः—a charcoal-burner.

अनन्तर *adj.*——adjacent, next.

*adv.*–Then, after that.

अनुगतदासीभाव *adj.*—slave for-ever.

अनुतिष्ठासु—wishing to perform.

अनुरुध्य *ind.*–in pursuance of.

अन्ध-तमसं—pitchy darkness.

अन्वयः—a race, a line.

अमल—pure, honest.

अमेध्यं—feces, filth.

अर्थ् with प्र—to request, to seek.

आकारः—expression of the face.

आततायिन् *adj.*—a desperado, one reckless of his life.

आधिः—anxiety.

आरा—a shoe-maker's awl.

इतोमुख—*adj.*—facing this direction.

उदारचरित—generous.

उन्मूलयति—*cl.* 10.—to root out, to pain extremely.

उपरोधः—disturbance, inconvenience.

उपस्करः—an article of furniture.

एकायनगत--bent upon a single object.

कण्ठगत—known by heart.

कतिमुद्र—consisting of how many coins ?

कर्मशाला—a work-shop.

कल्पः—a proposal, scheme.

काकतालीयवत्—accidentally.

कालकला—a short space of time.

कियता-अपि—to some extent.

कुडवः—a measure of grain.

कुतू *f.*–leather vessel for oil.

कृ with सम्—to prepare, to cook.

कृत्यभारः—responsibility.

कृपण—wretched, poor.

कृष्-कर्षति—to lead.

क्षति *f.*-harm, loss.

क्षयः—ruin, a house.

क्षिप् with आ-to cut short, to interrupt.

क्षिप् with सम्—to reduce, to lessen.

क्षीरकण्ठ—too young, infant.

क्षौमं—silk. *adj.*—made of silk.

गम् *caus.*—to bespeak, to indicate.

गर्भेश्वर—born rich.

गैरिकं—a red mineral, गेरु.

गो *f.*—a cow, speech, an organ of sense.

गो *m.*—a bull.

चक्रं—a mutitude.

चर् *caus.*-with वि-to think, to hesitate.

चर्मसेविन् *m.*—a cobbler.

चल् with उद्-to set off.

चापलं—rashness, officiousness.

चेष्टितं—a deed, feat.

छन्दः—a whim, pleasure.

छद्मबहुल—deceitful.

छद्ममुखं—a mask.

जतु—lack.

जातं—entirety, the whole.

जातरूपं—gold.

जिज्ञासा—search, quest.

जिजीविषु—wishing to live.

जुष्-जुषते—to enjoy, to take.

ज्ञा with अभि—to recognize.

ज्ञा with प्रति—to promise, to vow, to declare solemnly.

झम्पा—a *jump*, a leap.

तार्क्ष्यः—a vulture.

तिरोहित—vanished, out of sight.

त्रपु—tin.

दुरूह—difficult to guess, inconceivable.

दृति *f.*—leather.

दृश् with उद्-to expect, to foresee.

देशिकः—a teacher.

द्वारफलकं—a door-leaf.

धनग्रन्थिः—a purse for money.

धा with अति-सं—to deceive, to over-reach.
with सं-नि–to be present or near.
with सं-वि–to prepare.

धूमवर्ति *f.*—a cigar.

धूमायते ( a नामधातु )—to give out fumes.

नाम *ind.*—by name, surely, falsely.

निकृति *f.*—knavery, a trick.

निचयः—a store, a heap.

निदर्शनं—an illustration, an example.

नियन्तृ *m.*—a driver.

निर्वर्तनं—carrying out.

निर्वापयति *caus.*—to put out.

निर्विशेष—the same as, not different, equal.

निलयः—a hiding-place.

निषेधः—prohibition.

निस्त्रिंश—cruel, merciless.

निःश्रेणि *f.*—a ladder.

नी with उद्—to infer.

पद् with प्रति—to do, to act.

पराभ्यूहः—the being guessed by another.

परिग्रहः—a possession, a wife.

परिच्छेदक्षम—measurable.

परिवृढः—a leader.

पश्चिम—hinder, lying at the back.

पाटवं—skill, healthy condition.

पालयति with प्रति—to wait for.

पुरुषार्थः—man's efforts.

पेशलोदार—sweet and generous.

प्रकाश—open, known.

प्रकाशलब्ध—open, not concealed.

प्रच्छन्नघातकः—an assassin.

प्रजावती—a brother's wife.

प्रतिपत्ति *f.*—a remedy, a measure.

प्रतिश्रवणं—a promise.

प्रत्ययः—a belief, conviction.

प्रत्यादेशः—refusal, reluctance.

प्रत्यायनं–convincing another.

प्रपातः—a precipice, cliff.

प्रसन्न—pleased, right, suitable.

प्रसेविका—a bag or purse.

प्रस्तावः—an introduction.

प्रह्व—bent towards, favourable to.

प्राकारः—a rampart, a wall.

प्रेतसंस्कारः—the funeral.

फूत्कारः—sobbing.

बहुल—full of, replete.

बाढ *adj.*—firm, strong. *ind.*—yes.

°ब्रुव *adj.*—in name only, unworthy.

भट्टारकः—a king, the sun.

भल् with नि *cl.* 10.—to observe minutely.

भस्त्रिका—a leather bag.

भुजिष्या—a female slave.

भू—with प्र—to be able, to command, to have mastery over.

भूरिलाभं—at a great profit, profitably.

मण्डलाग्रः—a dagger, poniard.

मनीषितं—the desired object, desire.

महानसं—the kitchen.

मात्रा—a small quantity, any potent medicine of a particular shape.

माया—fraud, deceit.

मायावणिज्—a false merchant.

मारजानि *f.*—a proper name.

मार्गणं—search, inquiry.

मुखरः—a leader.

मुखस्यूतः—the corn-bag for the horse.

मूर्धन्य—capital, excellent.

यत् *caus.* with निर्—to revenge, to pay back, retaliate.

यदिकिल—perchance.

यवसं—grass, fodder.

यातायातानि *plu.*—going to and fro.

यावत्सूक्ष्मं—as accurate as possible.

युगपर्ययः—the revolution of an age.

रम् with उप—to stop, to die.

रसायनं—a tonic, an invigorating medicine.

रुच्य—palatable.

लक्ष्मन् *n.*—a mark, sign.

वनराजि *f.*—a growth or line of trees.

वसावर्ति *f.*—a wax candle.

वस्तुतः—actually, in fact.

वाच्य—censurable.

वाग्व्यवहारः—an oral discussion.

विडम्बयति (*cl.* 10)—to mock.

विधिवत्—formal, regular.

विपणि *f.*—a market.

विपर्ययः—the reverse of a thing.

विमनायते (a नामधातु)—to be sad.

विपुलावकाश—spacious, wide.

विश् with सं—to sleep.

विशेषः—a particular, or special feature.

विष् with परि *cl.* 3 *U.*—to serve as food.

वृज् with आ *caus.*—to win over.

वृत् *causal* with वि-परि–to revolve in the mind, to think over.

वेदिका—a raised piece of ground, a dais.

व्यतिकरः—an incident.

व्यवसायिन् *m.*—a merchant.

व्यवहित—hidden, intercepted.

व्याक्षिप्त—distracted, uneasy.

शिलोच्चयः—a hill.

शी with अनु—to repent.

श्रु with आ—to obey.

संविभागः—a share.

संशयः—a doubt, danger, risk.

संकेतस्थानं—a meeting-place.

संनद्ध—prepared, ready.

संपन्न—fulfilled, rich.

समं—at the same time.

सर्वात्मना—whole-heartedly.

सविधं—vicinity.

साटोप—pompous, imposing.

साधारण—common.

साहसिकः—a desperado, a reckless fellow.

सिद्धार्थ—who has gained his object.

सुस्मूर्षित—tried to be recollected.

सूर्योढ—brought by the Sun, arrived at sun-set.

स्कन्दराजः—the god of robbers.

स्तेयार्ह—fit to be stolen.

स्था-तिष्ठति—to stop while walking.

स्नेहः—affection, oil.



हञ्जे—a vocative particle.

हृ with अभ्यव—to eat.

,, with व्यव—to deal.

,, with व्या—to speak.

Printed by M. N. Kulkarni, at the Karnatak Printing Press,
318 A, Thakurdwar, Bombay No. 2
and
Published by A W. Barker, Manager, Messrs. Longmans,
Green & Co. Ltd., 53, Nicol Road, Bombay.